सर्वाङ्गान्यधिकृत्य द्वादशभिर्भावैः सूक्ष्मो विचारः कर्तुं शक्यते इदमत्रावधेयम् राशिस्वरूपं तत् स्वभावः तद्स्थितिः योगकालः सर्वेऽपि शुभाशुभविचारे सूक्ष्मरूपेण परिचिन्तनीया भवन्ति ।

यतोहि मानवशरीरं त्रिदोषयुक्तं वर्तते । सर्वेषां दोषाणां समत्वे सुस्वास्थ्यम् भवति कफवातपित्तेष्वेकस्य वृद्धौ रोगः समुत्पद्यते इति रोगोत्पत्तौ चिकित्सासिद्धान्तः तथा च पाञ्च-भौतिकम् इदं शरीरं पञ्चभिर्भूतैर्निर्मितम् ।। अस्माकमाकरेषु रविचन्द्रादीनां नवग्रहाणां तत्त्वानि पृथक् पृथक् वर्णितानि । इमानि पञ्चतत्वानि निम्नलिखितानुसारं नवग्रहेषु निर्धारितानि सन्ति ।

तानि च यथा — सूर्ये–अग्नितत्वम्, चन्द्रमसि जलम्, भौमे अग्निः, बुधे भूमिः, गुरौ–खम् ( आकाशतत्वम् ) शुक्रे जलम्, राहुकेत्वोरपि वायुतत्त्वमेव प्रतिष्ठितमस्ति । अतः नवग्रहेषु तत्तद् तत्वानि विमृश्य रोगप्रवृतिमूलकं निदानं कर्तव्यम् ।

सूर्यप्रभावाद् रोगनिदानं यथा हि — तापज्वर–त्र्याहिक द्वायहिकप्रवृत्तिविषमज्वर – सन्तापनम्-अस्थि जन्यरोग विशेषः राजयक्ष्मा (क्षयरोगः) – अपस्मारः, हृद्रोगः, शिरःशूलपीड़ा-नेत्रव्याधिः, पित्तजनित दुःखम्, कुष्ठरोगादयः भवन्ति अतः एतेषां सर्वेषां रोगाणां निदानं च वाञ्छेयुः तदा भगवतः भास्करस्य समाराधनानुष्ठानादिकं समाचरणीयम् । तेन रोगमुक्तिः भवितुं शक्यते इति वृत्तानुसारं मयूरकविकृतं सूर्याराधनं कुष्ठ रोग निवारकं भवतीति जनश्रुतिः । एवमारोग्यं भास्करादिच्छेत् इति पुराण मूलकं आख्यानम् ।

"सूर्य आत्मा जगतस्तस्थुषश्च............ ।"

समग्रं जगत् अग्निसोमात्मकम् इति श्रुति प्रमाणं प्राणिनां कृते चराचरजगति सर्वाणि तत्वानि जीवनोपयोग्यानि प्रमुखतः रविचन्द्राभ्यां प्रभावितानि नात्रसन्देहलेशोऽपि सूर्यान्तरमौषधीशचन्द्रः मनोधिष्ठातृत्वेन अस्माकं रोगनिदाने विचारणीयो विषयः चन्द्रमा कर्कस्याधिपतिः जलतत्वाधिष्ठाता क्षारभूमि निवासी जलचारी आल्हादको ग्रहः । स्त्रीस्वभावाभिभूता यथाः– "मनस्तुहिनगुः-वराहः ।"

अशुभश्चन्द्रः प्रायशः पाण्डुरोगं रक्तविकृतिं, कफजनित-ज्वरं जीवनोपयोगितत्वानि च विनाशयति, जलोदरं रात्र्यन्ध-रोगमुत्पादयति अथवा एतेषा रोगाणां विधायकश्चन्द्रः ।

अशुभकारको भौमः कुष्ठरोगम्, पित्तज्वरम् मज्जा-वृद्धिकृत् रोगं, उदरव्रणम्, वृषणवृद्धिम् अग्निशस्त्रलौष्ठ विद्युत्-ऊर्जा संसर्गजन्य रोगान् जनयति ।

बुधोऽपि प्रज्ञापराधान् चर्मरोगान् कण्ठनासिका दन्त-रोगान् जनयति ।

गुरुः विद्याबौद्धिकक्षतिं, नाभिप्रदेशीय रोगान् ( वाक्-पतिर्नाभिमूले ), उदर रोगान्, स्त्रीजन्यपारिवारिकाशान्ति मस्तिष्क-विकारान् च जनयति ।

एवं शुक्रोऽपि मलमूत्ररोगान्, जननेन्द्रियरोगान् गलग्रन्थि-रोगान्, रजोवीर्य दोषान् च जनयति ।

शनिकृतरोगेषु बस्तिप्रदेशीय–शल्यचिकित्सा–दन्तरोगान् जानु भङ्ग ( यतोहि मकरकुम्भराशौ जानुप्रदेशे ) पङ्गुताम् ग्रन्थिवायु रोगान् वातदोषांश्च जनयति ।

राहुकेतुभ्यां भौमशनिवत् विचारणीयम् ।

अत्र दुःस्थितौ राहुकेतू विषजन्तुभक्षणात्–विषप्रयोगात् मिथ्याभियोगाद् यवनात् शबरदस्युभिर्वा दुःखं जनयतः । कारागारे निवेशयति । भृत्य सेवकैः वञ्चनामुत्पादयति, नैऋत्य दिग्गमनप्रतिकूलं फलं प्रयच्छति ।

अतस्तावद् सूर्यादिग्रहाणां अशुभस्थान जनित दुष्टफल-निवारणार्थम् शुभफल प्राप्त्यर्थं च वैदिकप्रक्रियानुसारं पौराणिक-विधिना यन्त्रमन्त्रैर्वा जपदानाद्यनुष्ठानानि सेवितव्यानि नो इतराणि ।

सूर्यः पूर्वदिग् अधिष्ठातृदेवता शुक्रस्याग्नेयं, दक्षिणस्यां दिशि भौमः नैऋत्यां तमोग्रहौ, वरुण दिशिमन्दः, वायव्यां चन्द्रः, उत्तरस्यां दिशि बुधः, ऐशान्यां गुरुः ।
यथा चोक्तम —

"प्रागाद्या रविशुक्रलोहिततमः सौरेन्दुवित्सूरयः"

(बृ. जा. पृ. 28)

यस्य यस्य ग्रहस्य यानि यानि तत्वानि यानि यानि धातुपात्राणि वस्त्राणि च समाकलय्य नगराद् ग्रहदिशानुकूलं स्थानं विचिन्त्य

तत्तदधिष्ठातृदेवताराधन पुरस्सरम् अपेक्षित ग्रहस्य जपकरणात् रोगान् मुक्तिः तन्त्रेषु सूर्यादिग्रहाणां जपमालापदार्थ वैशिष्ट्यं प्रतिपादितं "देवो भूत्वा देवं यजेत्" इति शासनात् ग्रहानुकूलं वस्त्रासनादिकं तत्तद् पदार्थमालां गृहीत्वा जपकरणात् रोगान् मुक्तिः। कष्टान् मुक्तिः।

कांश्चन विशिष्टरोगयोगान् पुरःस्थापयामि—

**व्रणयोगाः**

(i) भौमेन युक्तो मन्दस्त्रिकस्थो व्रणमुत्पादयति।

(ii) भौमयुतो लग्नेशस्त्रिकगतो व्रणानुत्पादयति।

यथोक्तं गणेश दैवज्ञेन —

"भूमिमार्तण्डपुत्री व्ययभवनगतौ शत्रुगौ वा व्रणी स्यादिति" भौमार्किभ्यां युतो गुरुः हृदये व्रणं करोतीति। एवं षष्ठेश युक्तः पापः पञ्चमस्थो भवति-पुत्रदेहे व्रणमुत्पादयति, चतुर्थभावगतो मातृदेहे, तृतीयस्थो लघुभ्रातृदेहे, लाभस्थोऽग्रजस्य च। अनेन प्रकारेण अष्टमस्थः पापः स्वदेहे गुह्यरोगान् व्रणान् भगंदरानुत्पादयति।

**पाराशरः**

(i) षष्ठेशयुतो लग्नेशः षष्ठाष्टमगतोऽथवा देहे व्रणं जनयति।

(ii) त्रिकस्थो भानुः षष्ठेश युक्तो शिरसि व्रणमुत्पादयति, चन्द्रेण मुखे, भौमेन कण्ठप्रदेशे, शनिना अधोभागे, गुरुणा नाभिमूले, शुक्रेण जननेन्द्रियेषु, राहुणा वृषणेषु व्रणम् उत्पाद्यते एकाधिक पापग्रह योगात् दुःसाध्या शल्यचिकित्सावहाः व्रणरोगाः भवन्ति।

राशिस्थानाश्रित देहभागेषु व्रणविस्फोटक रोगं प्रकटयति पापग्रहः–यथा हि प्रथम राशि भावे शिरसि द्वितीय राशिभावे मुखे, तृतीय राशौ भावे च बाहौ कण्ठे, चतुर्थराशौ-भावे हृदय-वक्षःस्थले पञ्चम भाव-राशौ उदरे, नाभिप्रदेशादूर्ध्वम्, षष्ठ-भाव-राशौ नाभिप्रदेशादधः, सप्तम भावराशौ वस्तिप्रदेशे, अष्टम भावराशौ गुह्यरोगान्, नवम भावराशौ ऊरूप्रदेशे दशम-राशौ जानु-पीठ प्रदेशे, एकादश भावराशौ जंघायां द्वादश भावराशौ चाङ्घ्रिद्वयम्।

ग्रहानुसारं व्रणोत्पादने कारण विशेषः

सूर्ये—काष्ठ चतुष्पदाक्रतो व्रणः।

चन्द्रे—जलजन्तुभिः व्रणः।

भौमे—अग्नि-ऊर्जा विद्युत्प्रभृतिभिः व्रणान् जनयति।

बुधे—उच्चैः पतनात् वृक्षादथवा शिखरात् पतनात् वा।

गुरौ—उदरशूलादथवा मंदाग्निवशात्।

शुक्रे—भौतिक प्रपञ्चात् अथवा भोगवशात्।

शनौ—वात - व्याधिचिकित्सानिमित्तविशेषादथवा कृषि - पशु संसर्गात्।

**कुष्ठरोगाणामुदाहरणानि :—**

कुष्ठरोगकारको भानुः। चिकित्साशास्त्रे षट्त्रिंशद् (३६) परिमिताः कुष्ठरोगभेदाः वर्णिताः। तेषु कतिपयान् पुरःस्थापयामि विशेषतः सूर्य चन्द्र भौम मिश्रयोगात् रोगोऽयमुत्पद्यते।

(i) कर्कमकरमीन राशि नवमांश गताः चन्द्रभौममन्दाः शुभैरवीक्षिताः रक्तकुष्ठरोगमुत्पादयन्ति।

(ii) लग्नस्थितः पापग्रहः शुभग्रहसम्बन्धाभावात् कुष्ठरोगं तनोति।

(iii) भौम राहुभ्यां युक्तश्चन्द्रः श्वेतकुष्ठं तनोति तथा सूर्यशनौ कृष्णकुष्ठम्।

यथोक्तं जातके —

लग्नाधीशेन्दुपुत्रौ क्षितितनयनिशानायकौ क्वापि संस्थौ
युक्तौ स्वर्भानुना वा भवति हि मनुजः केतुना श्वेतकुष्ठो
आदित्यो भौमयुक्तस्तदनु शनियुतो रक्तकृष्णाख्य कुष्ठी
चन्द्रो मेषे वृषे वा कुज शनिसहितः श्वेतकुष्ठी सरोगो॥

(जा. ग्रं. योगाध्याये पृ. 44)

**उन्मादबुद्धिरोग—**

लग्नराशौ रवौ कलत्रे भूमिसुते जातस्योन्मादरोगं भवति । अत्र लग्न सप्तमस्थाभ्यां रवि भौमाभ्याम् अग्नि प्राचुर्य परवशात् शिरसि अत्युष्णता जन्य-उन्माद रोगः । एवं लग्ने शनौ कलत्रे कुजे त्रिकोणे वा उन्माद बुद्धि समुपैति जातकः ।

यथोक्तम् वराहः—

लग्नेरवौ भूमिसुते कलत्रेसून्माद भाक् तत्र नरो हि जातः
उन्मादबुद्धि समुपैति लग्ने शनौ कलत्रे सकुजे त्रिकोणे ।
(जा. पा. श्लो. 192)

**अङ्गवैकल्यम्—**

शनिःवायुतत्त्वात्मको ग्रहः । यदि सः विकृतो भवति तदा जातकः पक्षाघातरोगेण पीडितः सञ्जायते यतो हि पक्षाघाते कुपितो वायुः स्नायुजाल विकृति कृत्वा तस्यार्धाङ्गं मृत प्रायं करोति ।

ये ये च वायु तत्त्वात्मकाः प्रधानाः ग्रहाः वर्तन्ते तेषां विरुद्धग्रह संयोगेन जातको विकलाङ्गो भवति । ते चामी योगाः लग्नस्थं शुक्रं यदि शनिः कयाऽपि दृष्ट्या पश्यन्ति तदा विकलाङ्गताः सम्भवन्ति ।

शनि भौमज्ञाः गुरुयुताः कट्यां पीडां वैकल्यं वा जनयन्ति । शनि षष्ठेशौ रिःफगौ पापदृष्टौ सतो जंघायां वैकल्यं-पीडां पङ्गुत्वं वा जायते । "शनिना पङ्गुः" । नीचांशस्थस्य षष्ठेशो यदा शनि युतो भवति तदा चतुरशीति ( 84 ) वायु-रोगेष्वेकोऽवश्यं सञ्जायते ।

**रोगप्रशमनोपायाः**

अस्माकमाकरग्रन्थेषु मानवहितैषिभिः महर्षिभिरनेकोः रोगोपशमनोपायाः वर्णिताः । कस्मिन् कस्मिन् ग्रहे, किं किं रत्नं किमौषधं सहायकं भवति तत्सर्वमपि संहितासु वर्णितमस्ति ।

**रत्नचिकित्सा—**

सूर्यप्रीत्यर्थं माणिक्यम् चन्द्राशुभफल निवारणाय मुक्ता-फलम् ( वसरा मौक्तिकः इति प्रसिद्धम् ) भौमारिष्ट निवृत्यर्थं विद्रुमम्, बुधप्रीतये गारुत्मकम्, गुरुप्रीत्यै पुष्पकं ( "पुखराज" इति प्रसिद्धम् शुक्रारिष्ट शमनाय वज्रं (हीरकम्), शनि प्रीत्यै नीलम् राहुदोषोऽपशान्त्यै च गोमेदम्, केतौ कृते वैदूर्यमिति रत्नानि सन्ति । येषां विधिवत् सन्धारणेन तद्ग्रहदोषोपशमनात् रोगनिवृतिर्भवति अर्थात् रोगश्यि ग्रहस्य प्रीत्या रोगविनाशः सञ्जायते ।

सूर्यादिग्रहदोष शान्तये निम्नलिखितौषधयः प्रभवन्ति । सूर्यादिग्रहाणां प्रीत्यर्थम् इमाः औषधयः यदि विधिवत् धार्यन्ते तदा अवश्यं रोगविनाशो भवति । सूर्यस्य-शान्त्यर्थं बिल्वम्, चन्द्रस्य क्षीरिणी, भौमस्य नागजिह्वा, बुधस्य वृद्धदारः, गुरोः-भाँगी, शुक्रस्य सिंहपुच्छम्, शनेः बिच्छोलं, राहोः चन्दनं केतोश्चाश्वगन्धः फलदाः भवन्ति ।

रोगशमन विचारे चन्द्रस्याऽपि विचारोऽवश्यं कार्यः यतो हि सर्वग्रहेषु पृथिव्यां निकटस्थश्चन्द्रएव । अतश्चन्द्राधिष्ठित राश्यनुसारमपि रोगस्य शमनं विचार्यम् ।

प्राचीनग्रन्थेषु औषधिग्रहणवर्णने अनेक – योगाः एतादृशाः वर्णितास्तेभ्यः चन्द्रस्य माहात्म्यं स्वतः सिद्ध्यति ते चामी योगाः । यदि विरेचनौषधं जलराशिस्थे चन्द्रे सति गृह्यते तदा रोगिणो रोग निवृतिर्जायते ।

कुत्सित रोग शोधनमपि एतादृशः एव कार्यकाले कार्यम् । स चन्द्रे लग्नेशे अनुदितभागे स्थिते सति औषधग्रहणं श्रेष्ठम् । शुक्लपक्षे वृषराशि गते पापदृष्टिरहिते उदितभागेऽपि चन्द्रमसि नेत्रशल्यचिकित्सा सफला भवति ।

इत्थं यदि सूक्ष्मदशान्तर्दशा क्रमेण षष्ठभावं विचारयामः तदा रोगस्य निदानं चिकित्सापि ग्रहानुसारं निश्चेतुं शक्यते । ●

# महाभाष्यं वा पठनीयम् महाराज्यं वा पालनीयम्

डॉ० हर्षनाथ मिश्रः

आचार्यः, शास्त्रचूड़ामणि योजना,
केन्द्रीय संस्कृत विद्यापीठम्, नई दिल्ली

महतः स्नेहस्यैवेदमवदानं यदस्यामभिरूपभूयिष्ठायां विदुषां परिषदि विरलगुणेन तुच्छेनापि मया सम्मानितमाध्यक्ष्यास्पदमधिष्ठातुमवसरो लब्धः। इयमुपक्रतिकथाऽतिवितता बहुतिथं कालमपेक्षते। अतः इतो विरम्य सम्मेलनस्य मन्त्रिणः श्रीमोतीलालजोशी महोदयान् प्रति अन्यांश्च सर्वान् प्रति कार्तज्ञ्यं भूयो भूयो विनिवेद्य प्रकृते विषये किञ्चिद् व्याहरामि–

**"महाभाष्यं वा पठनीयं महाराज्यं वा पालनीयम्"** अनुभववतां विदुषामियमुक्तिः प्रत्यक्षरं साभिप्राया। अत्र महाभाष्याध्ययनमहाराज्यपालनयोः साम्यं दर्शितम्। महतो राज्यस्य पालने सुराजाऽऽनन्दमनुभवति कुत्सितस्तु नृपस्तत्र क्लेशमेव प्राप्नोति यो राजा शास्त्राध्ययनप्राप्तप्रतिभाक्षालनः सद्गुरुसन्मन्त्रिसम्मतिगृहीतमार्गदर्शनो राज्यं पालयति, तस्य प्रजाः प्राप्तसुखसौविध्यास्तमभिनन्दन्ति, ततो विपरीतो लब्धनिन्दः स्वकर्तव्यच्युतः कलङ्कपङ्कनिमग्नोऽवसीदति। तथैव महाभाष्यं विहितगुरुकृताध्ययनस्वाध्यायंनानाविध रहस्यावदानेन पाठकं प्रतिभावन्तं सरसकाव्यमिव लोकोत्तराह्लादेन सुखयति, अकृतगुरुसेवः स्वल्पज्ञानदुमदः कुपाठकस्तु दुःखमेवात्राश्नुते वैयाकरणपाशः स प्रतिपदमवसीदति।

अत्र सूक्तौ महाभाष्यमहाराज्ययोर्यत् साम्यमुत्प्रेक्षितं तन्माघेन कविना जन्मनालंकृतराजस्थानेन स्वीये शिशुपालवधे प्रादर्शि। सर्वैरस्माभिः पद्यमिदं व्याकरणं राजनीतिं च पठद्भिः सर्वदा स्मर्यत एव—

> अनुत्सूत्रपदन्यासा सद्वृत्तिः सन्निबन्धना।
> शब्दविद्येव नो भाति राजनीतिरपस्पशा॥
>
> ( शिशुपा व० 2/112 )

उत्तमो महाराजो महद्राज्यं प्राज्यं शासत् नीतिशास्त्रीयसूत्र विरुद्धमेकं पदन्यासमपि न विदधाति, स सद्वृत्तीनां भृत्यादि वेतनजीविकादीनां व्यवस्थां करोति, योग्यतया कर्तव्यनिर्वाहकाणामनुर्जीविनां क्रियावसाने यथायथं पारितोषिकदानेन सन्तुष्टिं तथा सम्पादयति यथा अन्येऽपि कर्मकरा उत्साहिता भूत्वा स्वकर्तव्यं निर्वहेयुः, स सुराजा योग्यान् स्पशान् गूढचरान् नियोज्य तद्दृशा दृष्टसकलराज्यव्यवहारो दण्ड्यान् दण्डयन् सज्जनान् सम्वर्धयन् स्वराज्यं राजन्वत् करोति राजवत्त्वादपयशसो वारयति च तथैव यो वैयाकरणः सूत्राक्षरमतिक्रम्य पदं न न्यस्यति, वृत्तिग्रन्थानां प्राचीनानां काशिकाप्रभृतीनां चार्वाचीनानां सम्यग्ज्ञानेन सम्पन्नोऽस्ति, सन्निबन्धनेन भाष्यग्रन्थेन समृद्धः महाभाष्यपस्पशाह्निकपरिशीलनलब्ध पाटवः स एव शब्दानुशासनसमर्थो मन्यते। अत्र पस्पशापदं सर्वस्यापि महाभाष्यस्यालक्षणं प्रधानत्वादन्यत्राप्रतिपादितस्य प्रयोजनादिकस्य प्रतिपादनाच्च तस्योल्लेखः काकेभ्यो दधि रक्ष्यतामितिवत्।

> बुद्धिशस्त्रः प्रकृत्यङ्गो घनसंवृतिकञ्चुकः।
> चारेक्षणो दूतमुखः पुरुषः कोऽपि पार्थिवः।
>
> ( शिशु पा. व. 2/85 )

स पुरुष एव प्रशस्यः पार्थिवः यो बुद्धिशस्त्रेण शस्त्रवान् प्रकृत्यङ्गेन दृढाङ्गः मन्त्रणाघनसंवृति कवचाच्छन्नशरीरः चारचक्षुषा विलोकितस्वपरराज्यमण्डलः तथा मेधाविवाक्पटु राष्ट्रभक्तदूतमुखो भवति। अन्यैरङ्गैर्दृढैरुपेतस्यापि मानवस्य नेत्रहीनस्य यथा प्रतिपदमवपातः संभाव्यते तथा सर्वगुणसम्पन्नस्यापि राज्ञो योग्य स्पशरहितस्य राज्यपालननिरतस्य कार्यविधौ प्रमाद आपतति अतएव भारविणाप्युक्तम्–

> क्रियासु युक्तैर्नृप चारचक्षुषो
> न वञ्चनीयाः प्रभवोऽनुजीविभिः।
> अतोऽर्हसि क्षन्तुमसाधु साधु वा
> हितं मनोहारि च दुर्लभं वचः॥
>
> ( किरातार्जु० 1/4 )

इत्थं स्पशानां कटुवचनमपि महाराजैः श्रोतव्यमित्युक्तं भवति। हितावहत्वात् परिणामसुखकरत्वाच्च। शिशुपालवधश्लोके पस्पशपदं समस्तस्य महाभाष्यस्योपलक्षणम्। महाभाष्यं हि नेत्रं वैयाकरणानाम्। याथातथ्येनार्थप्रकाशकत्वात्। तद्रहितानां तेषां पदे पदे स्खलनमवपतनं च संभाव्यते। वार्त्तिकसूत्रादिप्रत्याख्यानपरकं महाभाष्यवचनमप्रियमपि वैयाकरणैरङ्गीकर्तव्यमङ्गीक्रियते च।

अनेनापि महाराज्यपालनम् महाभाष्याध्ययनं च तुल्यमिति सिद्धचति। व्याकरणं शब्दानुशासनमिति पतञ्जलिना प्रख्यापितम्। शिष्टप्रयुक्ताः शब्दाः यथा सिद्धयेयुस्तथैव सूत्रादीनि निर्मेयाणि यदि सूत्रप्रवृत्याऽनिष्टं रूपमापतति तर्हि प्रवृत्तिर्वारणीया। लक्ष्यानुगतं सूत्रमत्रास्ति अतएव व्याकरणं शब्दानुशासनमस्ति न तु शब्दशासनम् तच्छब्दान्वाख्यायकमस्ति नतु शब्दाख्यायकम्। अत एव स्थितस्य गतिरत्र चिन्त्यते। महाभाष्येऽत एवानेके योगविभागास्तथाकृता यथाऽव्याप्त्यतिव्याप्तिदोषा निराकृता अभूवन्। सह सुपेत्यत्र योगविभागं विना अनुव्यचलदित्यादौ समासो न स्यात् तं च विना विवक्षाधीनसन्धिस्वीकारात् सन्धिरहितस्यापि साधुता स्वीकृता स्यात् न च तथा शिष्टैः प्रयुज्यत इति योगविभाग आश्रितः। "पञ्चमी भयेन" इत्यत्र पञ्चमीति योगविभागाभावे अलोविधिरल्विधिः पदादादिः पदादिः भोगोपरतः ग्रामनिर्गत इत्यादि शिष्टप्रयोगाः न सिद्धचन्ति। इमे न सिद्धचन्ति चेदव्याप्तिदोषः। अतस्तत्परिहाराय योगविभाग आश्रयणीयः लक्ष्यमस्ति तत्साधकं लक्षणं नास्ति चेदयं वैयाकरण दृष्टिदोषो न तु प्रयोक्तुर्दोषः। प्रयोक्तॄणां प्राथमिकत्वात् तत्प्रयोगान्वाख्यायकं लक्षणं नास्ति चेत्तल्लक्षणदोषेण भवितव्यम्। सर्वत्रविभाषा गोः अवङ् स्फोटायनस्य इतिसूत्रिते गवाक्ष इतिवत् गोऽक्ष इत्यप्यापद्यत। न च 'गोऽक्ष' पदेन गवाक्षार्थः प्रतीयते देवदत्तस्थाने देवेन दत्त इति प्रयोगवत्। अतोऽत्र व्यवस्थित विभाषाऽऽश्रीयते।

भगवान् पतञ्जलिः वैयाकरणसूतसम्वादेन अजेर्व्यघञपोः 2.4.56 इति सूत्रोक्तेन प्राप्तिज्ञं निन्दति इष्टिज्ञं च प्रशंसति–घञपोः प्रतिषेधे क्यप, उपसंख्यानम् समजः समाज इत्यादाविव समजनं समज्या इहापि प्रतिषेधो यथा स्यात्। तर्त्हि वक्तव्यं न वक्तव्यम् अप् इति न प्रत्ययग्रहणं किन्तु प्रत्याहारग्रहणम् अपः अकारेण क्यपः पकारेण च अप् इति प्रत्याहारो निष्पाद्यः। नन्वेवं क्तिनोऽपि तन्मध्यपतितत्वात संवीतिरित्यत्र 'वी' आदेशो न स्यादित्युक्त्वा उपायान्तरं दर्शयन् स पुनः कथयति–एवं तर्हि नार्थ उपसंख्यानेन नापि घञपोः प्रतिषेधेन। इदमस्ति चक्षिङः ख्याञ् वा लिटि इति। ततो वक्ष्यामि–अजेर्वी अजेर्वीभावो भवति वा। व्यवस्थित विभाषा 'वा' इति। व्यवस्थिता चासौ विभाषा व्यवस्थित विभाषा। लक्ष्यानुसारेण यो विधिरिष्टस्थले क्वापि विकल्पेन क्वापि च नित्यरूपेण प्रवर्तते क्वापि च न प्रवर्तते एतादृशो वैकल्पिकविधिर्व्यवस्थितविभाषाविधिर्भवति। तेनेह भविष्यति 'प्रवेता' 'प्रवेतुम्' 'प्रवीतो रथः', संवीतिः। इह च न भविष्यति समाजः, समजः, उदाजः, उदजः, समजनम् उदजनं, समज्या, पदाजिः। तत्रायमप्यर्थः– इदमपि सिद्धम् भवति प्राजिता इति। किं च भो इष्यत एतद्रूपम्? बाढमिष्यते। एवं हि कश्चिद् वैयाकरण आह कोऽस्य रथस्य प्रवेता इति। सूत आह–अहमायुष्मन्नस्य रथस्य प्राजिता इति। वैयाकरण आह–अपशब्द इति। सूत आह–प्राप्तिज्ञो देवानांप्रियः, नत्विष्टिज्ञः। प्रयोगदर्शनेन अजेर्व्यघञपोः इति सूत्रं विकल्पेन प्रवर्तते तेन प्रवेता प्राजिता इत्युभयं साधु इति सूताभिप्रायः। सूत्रे 'वा' शब्दाभावात् प्रवेता इत्येव साधु न तु प्राजिता इति प्राप्तिज्ञस्य वैयाकरणस्य तात्पर्यम्। प्राप्तिज्ञस्य स्वस्य देवानांप्रियत्वोक्त्या स्वस्य चेष्टिज्ञत्वाकथनेन क्रुद्धो वैयाकरण पुनराह– "अहो न खलु अनेन दुरुतेन बाध्यामहे इति। सूत आह–न खलु वेञः सूतः, सुवतेरेव सूतः। यदि सुवतेः कुत्सा प्रयोक्तव्या दुःसूतेनेति वक्तव्यम् नतु दुरुतेनेति। अत्र सौत्रीमेव प्राप्ति जानान आचार्याणामिष्टिमजानन् वैयाकरणो देवानांप्रियः अर्थात् मूर्खः कथितः। वैयाकरणेन वेञ उत इति यद्रूपं साऽस्य सञ्ज्ञा। सूते पूजायां सु। शब्द इति मन्यमानेन तस्य दुष्टस्य कृते दुरुतशब्दः प्रयुज्यते। किन्तु तन्तुसन्तानक्रियस्य वेञः सारथ्यर्थं प्रयोगो न संघटते अतः षूप्रेरणे इत्यस्मात् बाहुलकात् कर्तरि अथवा गत्यर्थाकर्मकश्लिषशीङ्स्थासवस जनरुहजीर्यतिभ्यश्च 3.4.72 इति सूत्रे चकारस्यानुक्तसमुच्चयार्थकत्वात् कर्तरि वर्तमानेक्तोऽत्र मन्तव्यः रथवाहकस्य सारथे रथे प्रेरणात् सूत इति सञ्ज्ञा संगच्छते। अनेन संवादेनेष्टिज्ञस्य व्याकरणे यथा समादरः सिद्धचति तथैव इष्टिज्ञो महाराजः प्रशस्यते न केवलं शास्त्रज्ञः। अतएव बलरामः कथयति—

> अन्यदुच्छृङ्खलं सत्त्वमन्यच्छास्त्रनियन्त्रितम्।
> सामानाधिकरण्यं हि तेजस्तिमिरयोः कुतः॥
> (शिशु. 2/62)

यद्यपि सिद्धं लोकविरुद्धं नाचरणीयं नाचरणीयम्। इति सिद्धान्तः वैयाकरणैः पाल्यते अतएव रघुनाथशब्दे पूर्वपदात् संज्ञायामग इति शास्त्रसिद्धमपि णत्वं लौकिकप्रयोगविरुद्धं न क्रियते विश्राम शब्दे च शास्त्रासिद्धमपि उपधादीर्घः क्रियते इति। इत्थं यथा व्याकरणे शिष्टप्रयोगसिद्धिमुखेन लक्षण निर्मीयते प्रयोगसिद्धचनुरोधेन च लक्षण प्रवर्त्यते तथैव राजनीतौ अपि प्रजासुखसमृद्धिमुद्दिश्य नियमा निर्मीयन्ते प्रवर्त्यन्ते च।

अतोऽपि महाराज्यपालनप्रक्रिया व्याकरणाध्ययनप्रक्रिया च समाने । लक्ष्यमुपेक्ष्य ये प्रवर्तन्ते ते वैयाकरणा निन्द्याः प्रजाहितमुपेक्ष्य निरङ्कुशराजनियमेनप्रवर्तमाना भूपा इव । यथाकालं प्रयोगमागतानां शब्दानां साधनाय यथा व्याकरणे वार्तिकादि निर्माण प्रशस्यते तथा कालक्रमेण राजनीतावपि नियमसंशोधनपरिवर्धनादिकं प्रजेच्छानुसारेण क्रियमाणं स्तूयते । पतञ्जलिनाऽतएव बहवो वार्तिकोद्भावनाः स्वीकृताः स्वयं चोद्भाव्य बहूनि वचनानि निर्मितानि ।

नन्वेवं 'न लक्षणेन पदकारा अनुवर्त्याः । पदकारैर्नाम लक्षणमनुवर्त्यम् । यथालक्षणं पदं कर्तव्यम् इति भाष्यवचनं विरुद्धं परस्परव्याहतञ्चेति चेन्न 'अनुवर्त्य' पदे णिजङ्गीकारात् । अतएव प्रयुक्तानां हीदमन्वाख्यानमिति महाभाष्यवचसि संकोचाश्रयणं मुधा न कर्तव्यं भवति । एवञ्च लक्षणाश्रितार्थानुवर्तनप्रेरणावन्तः पदप्रयोगकर्त्तारो न भवेयुः किन्तु शिष्टाभीष्टप्रयोगसिद्ध्यनुरूप प्रेरणामाश्रित्यपदकारापरपर्यायैर्वैयाकरणैर्लक्षणानि निर्मातव्यानीत्येवार्थस्तस्य महाभाष्यवचसः । एवञ्च पदानुसार्येव लक्षणमुपज्ञातव्यमिति सिद्धम् । पदपाठश्च गुरुशिष्टजनसम्प्रदायसिद्ध एव कर्तव्य इति महाभाष्यकृतां सिद्धान्तः[1] । अतएव पृषोदरादीनि यथोपदिष्टम् । इति 6-3-109 सूत्रे पतञ्जलिनोक्तम्-पृषोदरादीनीत्युच्यते कानि पृषोदरादीनि ? पृषोदरप्रकाराणि आदिशब्दोऽत्र प्रकारार्थकः पृषोदरशब्द सदृशानीत्यर्थः व्यवस्थार्थकत्वे पृषोदरप्रभृतय इति तात्पर्यस्वीकारे यथोपदिष्टग्रहणमनर्थकं स्यादिति तत्र कैयटः ।

कानि पृषोदरप्रकाराणि येषु लोपागमवर्णविकाराः श्रूयन्ते नचोच्यन्ते सूत्रैः । यथोपदिष्टानि इत्यत्र यथेति किमर्थम्? प्रकारवचने थाल् येन प्रकारेणोपदिष्टानि तेन साधूनि भवन्तीत्यर्थबोधकस्थाल् प्रत्यय इति कैयटः । किमिदमुपदिष्टानीति, उच्चारितानि कुत एतत् दिशि रुच्चारणक्रियः । उच्चार्य हि वर्णानाह उपदिष्टा इमे वर्णाः । अत्र उपदिष्टा इति उच्चारिता इत्यर्थका दृष्टा इति भावः । कैः पुनरुपदिष्टानि ? शिष्टैः । के पुनः शिष्टाः । वैयाकरणाः कुत एतत् शास्त्र पूर्विका हि शिष्टिः । वैयाकरणाश्च शास्त्रज्ञाः । यदि हि शास्त्रपूर्विका शिष्टिः शिष्टिपूर्वकं च शास्त्रम्, तदितरेतराश्रयं भवति । इतरेतराश्रयाणि च कार्याणि न प्रकल्पन्ते । एवं तर्हि निवासतश्चाचारतश्च । स चाचार आर्यावर्त्त एव । कः पुनरार्यावर्तः । प्रागादर्शात्-प्रत्यक् कालकवनात् । दक्षिणेन हिमवन्तम् उत्तरेण पारियात्रम् । एतस्मिन् आर्यावर्त्ते आर्यनिवासे ये ब्राह्मणाः कुम्भीधान्या अलोलुपा अगृह्यमाणकारणाः किञ्चित्कस्याश्चिद् विद्यायाः पारङ्गतास्तत्र भवन्तः शिष्टाः । अत्र कैयटः-आदर्शादयः पर्वतविशेषाः । आदर्शः कुरुक्षेत्रेपर्वतः कालकवनम् प्रयागः । परियात्रो विन्ध्यः इति नागेश उद्योतकारः । इत्थमासमुद्राच्च पूर्वस्मादासमुद्राच्च पश्चिमात् । तयोरेवान्तरा गिर्योरार्यावर्तं प्रचक्षते इति मनूक्तलक्षणलक्षिते देशे ये कुम्भीधान्याः कुम्भ्यामेव येषां धान्य तादृशाः दम्भार्थमपि कुम्भीधान्यत्वं स्यादत आह अलोलुपाः अगृह्यमाणकारणाः दृष्टं कारणमन्तरेणैव सदाचारानुवर्तिनः रागादिवशाद् ये नान्यथावादिनः विनैवाभियोगेन तपः स्वाध्यायनिरताः निष्कारणधर्मबुद्ध्याधीतनिष्णातवाङ्मयाः शिक्षाः साधुत्व परिज्ञाने प्रमाणम् । इत्थं व्याकरणे अलोलुपा अर्थ संग्रहालोलुपाः सदाचारिणो ब्राह्मणा यान् शब्दान् प्रायुञ्जत तें साधवः तथा राजनीतावपि त्यागिनः आचारवन्तः सवभूतहितेरता ज्ञानचक्षुषा दृष्टयाथातथ्याः वशिष्ठचाणक्यादयः प्रमाणं साधुत्वासाधुत्वनिर्णये इति पतञ्जलिना उभयोः साम्यमङ्गीकृतम् ।

पुनः पृच्छति भगवान् पतञ्जलिः—यदि शिष्टाः शब्देषु प्रमाणं किमष्टाध्याय्या क्रियते ? उत्तरयति–शिष्टपरिज्ञानार्थाऽष्टाध्यायी । कथं पुनरष्टाध्याया शिष्टाः शक्या विज्ञातुम् ? अष्टाध्यायीमधीयानोऽन्यंपश्यति अनधीयानं ये वाऽस्यां विहिताः शब्दास्तान् प्रयुञ्जानम् । स पश्यति नूनमस्य देवानुग्रहः स्वभावो वा, योऽयं नाष्टाध्यायीमधीते । ये चास्यां विहिताः शब्दास्ताँश्च प्रयुङ्क्ते । नूनमयमन्यानपि जानातीति । एवमेषा शिष्टज्ञानार्थाऽष्टाध्यायी इति । अयंभावः अनधीताष्टाध्यायीकोऽप्ययं तस्यां विहितान् शब्दान् प्रयुङ्क्ते । अतोऽयंप्राप्तदेवानुग्रहः प्रकृत्या वा शिष्ट इति निर्णये जाते तत्प्रयुक्ता अन्येऽपि शब्दाः साधव इति निर्णयायाष्टाध्याय्या अध्ययनं सप्रयोजनम् । तपस्त्यागपूतेन राजनीतिशास्त्रानुक्तमपि यत्कथयति तदपि तदीय प्रजाहितकरत्वात्स्वीकरणीयं भवति । इत्यपि साम्यमनयो र्व्याकरण राजनीतिशास्त्रयोरस्त्येव ।

सन्धिः विग्रहः यानम् आसनम् द्वैधीभावः समाश्रयः इति षड्गुणाः, प्रभुमन्त्रोत्साहाख्यास्तिस्रः शक्तयः, आभिस्तिसृभिः शक्तिभिः साध्याः सिद्धयोऽपि तिस्रः । वृद्धिक्षय स्थानानि छत्रिन्यायेन त्रय उदया उच्यन्ते महाराज्यपालकेन एतेषां समुपयोगः यथाशक्ति यथाराज्यहितं क्रियते । दुर्बलो राजा बलवता सह कयाचिद् व्यवस्थया ऐक्यं यत् करोति स एव सन्धिः समान शीलव्यसनेषु सन्धिर्भवति । दुर्बलः सुग्रीवो बलवता रामेण समानव्यसनेन सन्धिं विधाय वालिनं जिगाय । समानशीलयोर्दुर्योधनजयद्रथयोः श्रीकृष्णपाण्डवयोः सन्धिः प्रसिद्धएव । वाग्घरिरित्यत्र अल्पप्राणो गकारः महाप्राणेन कयाचिद्व्यवस्थया हकारं महाप्राणं स्ववर्गीय महाप्राणेन घकारे परिणमय्य सन्धिना सन्तोषमनुभवति तन्मयमित्यादौ मकारोऽनुनासिको दकारं दन्त्यानुनासिकीकरोति । एतादृशः सन्धिर्युद्धोत्तर-

1. शिवदत्त दाधीचस्य—महाभाष्यच्छायोपेत संस्कराभूमिकोद्धृतं वाक्यजातं द्रष्टव्यम् (पृ० 23)

कालकृतसन्धिरिव पक्षद्वयस्य किञ्चिद्धानदानाश्रित इवास्त्येव । इकः स्थाने यण्सन्धिस्त्वान्तरतम्याश्रितः समानशीलमित्रनृपसन्धिरिव वर्तते । अतएव पतञ्जलिः कथयति–समाजेषु समाशेषु समवायेषु चास्यतामित्युक्ते नैव कृशाः कृशैः सहासते, न पाण्डवः पाण्डुभिः, येषामेव किञ्चिदर्थकृतमान्तर्यं तैरेव सहासते । तथा गावो दिवसं चरितवत्यो यो यस्य प्रसवो भवति तेन सह शेरते । यान्येतानि गोयुक्तकानि संघुष्टकानि भवन्ति तान्यन्योन्यमपश्यन्ति शब्दं कुर्वन्ति । एवं तावच्चेतनावत्सु । अचेतनेष्वपि– लोष्टः क्षिप्तो बाहुवेगं गत्वा नैव तिर्यग् गच्छति, नोर्ध्वमारोहति, पृथिवीविकारः पृथिवीमेव गच्छत्यान्तर्यतः । तथा–या एता आन्तरिक्ष्यः सूक्ष्मा आपस्तासां विकारो धूम आकाशे निवाते नैव तिर्यग् गच्छति, नार्वागारोहति । अब्विकारोऽप एव गच्छत्यान्तर्यतः । तथा—ज्योतिषो विकारोऽर्चिराकाश देशे निवाते सुप्रज्वलितं नैव तिर्यग् गच्छति नार्वागारोहति ज्योतिषो विकारो ज्योतिरेव गच्छत्यान्तर्यतः । इत्थं स्वभावसिद्धत्वादेव इको गुण इत्युक्ते इकारस्य एकार, ओकारश्च उकारस्य स्थाने स्यादत आन्तर्यवचनं न कार्यम् (स्थानेऽन्तरतमः **1-1-50**) इति पतञ्जलिः । राजनीतौ अन्यान्तर्यरहितौ परस्परं सौहार्दं भजेते तथा व्याकरणेऽपि । तथाचोक्तं महाभाष्ये "संप्रयोगो वा नष्टाश्वदग्धरथवत्" । तद्यथा—तवाश्वो नष्टः ममापि रथो दग्धः उभौ संप्रयुज्यावहै इति । एवम् इहापि ऋकारस्य गुणवृद्धिविषयेऽपि तव अकारस्य गुणस्य आकारस्य च वृद्धेरन्तरतमा प्रकृतिर्नास्ति ममापि ऋकारस्य अन्तरतम आदेशो नास्ति अस्तु नौ संप्रयोगः । अतः फलितम् अनान्तर्यमेवैतयोरान्तर्यम् । तन इयर्ति इत्यादौ ऋकारस्य गुणः अकारः मार्ग इत्यादौ च वृद्धिराकार इति । क्वापि सन्धिर्न क्रियते उभयोरपि वर्णयोरनुभूतस्वपर्याप्त सामर्थ्ययो राज्ञोरिव यथावदवस्थानमिव प्रकृतिभावस्वीकारात् । अतएव हरी एतौ पचेते एतौ अमी ईशा इत्यादौ उभयोः प्रबलम्मन्ययोः प्रकृतिभावः स्वीक्रियते । प्लुतोऽपि उच्चारणबलवत्तमो न परेण दुर्बलेन कृपया तस्य यथावज्जीवनेच्छुको न सन्दधाति अतएव आगच्छ कृष्ण अत्र गौश्चरति इत्यत्र प्रकृतिभाव एवेष्यते । यत्र च प्लुतोऽपि न तयोच्चारणोच्चैस्त्वमापद्यते तत्र सन्धिर्भवति अतएव पुत्रेति तन्मयतया तरवोऽभिनेदुरिति प्रयोगः । ह्रस्वोत्तरवर्तिनिच्छकारे सति चकारागमोऽपि छकारप्रभावं महाप्राणात्मकं विलोक्याल्पप्राणोह्रस्वस्तद्वर्ग्यमल्पप्राणं मध्ये संनिवेशरूप एव । इत्थं यथा महाराजः स्वराज्यहितं स्वप्रतिष्ठासंरक्षणादिकं च विलोक्य सन्धिमसन्धिं वा स्वीकरोति तथैव व्याकरणसाम्राज्येऽपि अर्थप्रत्यायनौचित्यमुखः सन्धिनियमः क्वापि प्रवर्तते क्वापि च नेति वाग्व्यवहारविश्लेषणपाटवमेव तत्र यथा बीजम् तथा राजनीतावपि विवेक वैलक्षण्यमपेक्षते । अन्तरङ्गसन्धिः प्रथमं विधीयते बहिरङ्ग सन्धिश्च पश्चात् अतएव शिव आ इहि इत्यत्र धातूपसर्गसन्धिरन्तरङ्गो भवति प्रथमं पश्चाच्च सवर्ण दीर्घाप्राप्त्या ओमाङोश्चेति पररूपेण शिवेहि इति रूपं जायतेऽभीष्टम् । एतच्च ओमाङोश्चेति ज्ञापनात् सम्भवति । अन्यथा प्रथमं सवर्णदीर्घे गुणे शिवेहि इति सिद्धे तत्रत्यमाङ्ग्रहणं व्यर्थं स्यात् । अतएवात्रासिद्धं बहिरङ्गमन्तरङ्गे इति न्यायो वैयाकरणैरङ्गीक्रियते राजनीतावपि अयमेव नियमः सर्वत्र प्रवर्तते । इत्थं सन्धौ उभे शास्त्रे समाने दृश्येते ।

विग्रहस्तत्र क्रियते यत्रैकार्थीभावाश्रितपदस्य विग्रहस्य च समानार्थकत्वम् यथा राजपुरुषः राज्ञः पुरुष इत्यादौ । यत्र च विग्रहेण एकार्था भावार्थो न निष्पद्यते तत्र विग्रहः परित्यज्यते । यथा कुम्भकारशब्दस्य योऽर्थः स'कुम्भस्य कार' इत्यनेना प्रत्ययात् परित्यज्यते । अतएवोच्यते वाक्येन संज्ञानवगमान्नित्य समासः । पूर्वपदार्थप्रधानोऽव्ययीभाव इत्यादि लक्षणमपि द्विमुनि व्याकरणम् अतिमाल इत्यादौ व्यभिचरितत्वात्प्रायोवादपरकमङ्गीक्रियते । इत्थं यथा न दृढनियमः कोऽप्यत्र लक्ष्यानुसारि व्याख्यानमेव श्रेयो मन्यते तथा राजनीतावपि प्रजाहितानुसारि व्याख्यानमेवाङ्गीक्रियते । विग्रहे एकार्थीभावे च समानफलके एव विग्रहो विधीयते नान्यथा ।

समाश्रयो नाम रिपुणा पीडचमानस्य बलवदाश्रयणम् । यथा भोयच्युत इत्यत्र बलवतौकारेण पीडचमानो यकारः अच्युतस्यादचेन अकारेण संयुज्यात्मानं लघुप्रयत्नोच्चरितत्वं सम्पाद्य लोपान्निवारयति ।" भक्तियुक्ताय शं ददद्याद् तुभ्यं देवः शिवः सदा, इत्यत्र प्राप्तस्ते इत्यादेश परं पादमाश्रित्य वार्यते तुभ्यमिति पदेन पादादौ स्वीयां स्थितिं घोषयता । विजिगीषोररिं प्रति यात्रा यानमुच्यते राजनीतौ । अत्रापि व्याकरणे निषेधापवादसूत्रे उत्सर्गसूत्रं जेतुं यातः । अतएव एभिरित्यत्र नेदमदसोरकोरिति विजिगीषुणाभियातत्वाद् अतो भिस ऐस् इति ऐसादेश न कर्तुं प्रभवति उप+एति इत्यादौ एत्येधत्यूठ्सु इति भवति एङि पररूपं च बाधितत्वान्न स्वशासनं प्रथयति ।

मिथः प्रतिबद्धशक्त्योः कालप्रतीक्षया तूष्णीमवस्थानमासनम् । कालज्ञो राजा समयं प्रतीक्षमाणस्तावदास्ते यावद्विग्रहयानादेरुचितः कालो नायाति । व्याकरणेऽपि तथा दृश्यते यथा अजागरीदित्यादौ ह्म्यन्तेति वृद्धिनिषेधो विशालं कालं प्रतीक्ष्योपलब्धोचितकालः प्रवर्तते–तथाहि अजागृ इस् त् इति स्थिते यण् प्राप्तः, तं सार्वधातुक गुणो बाधते तं सिचिवृद्धिः तां च जागर्तिगुणः जाग्रोऽविचिण्णल् ङित्सु इति बाधते अयं गुणोऽपि कालं प्रतीक्षमाणश्चिरं तूष्णीं तिष्ठति । तस्मिन् कृते अजागर् इस् त् इति स्थितौ वदव्रजहलन्तस्याच इति हलन्तलक्षणा वृद्धिः प्राप्ता नेटीतिप्रतिषिद्धा ततश्चातो हला-

देर्लघोरिति प्राप्तां वृद्धिं बाधित्वा अतोल्रान्तस्येति वृद्धिः प्राप्ता सा च ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम् 7.2.5 इति निषिध्यते । अत्रत्यो बाध्यबाधकभावः अवसरज्ञराजपुरुषकृत इव तथा चमत्कारजनको भवति यथा केनापि पद्यनिबद्धीकृत लोभमसंवृण्वता इत्थमुच्यते

गुणो वृद्धिर्गुणो वृद्धिः प्रतिषेधो विकल्पनम् ।
पुनर्वृद्धिनिषेधोऽतो यण्पूर्वाः प्राप्तयो नव ।।

( सि. कौ. पृ. 461 )

संहितत्वात्प्रबलशत्रुसमवाये उपजापाद्युपायेन वैमनस्योत्पादनं द्वैधीभावः । द्वैधीभावमिमं वर्णयन् भारविर्लिखति—

अपरागसमीरणेरितः क्रमशीर्णाकुलमूलसन्ततिः ।
सुकरस्तरुवत् सहिष्णुना रिपुरुन्मूलयितुं महानपि ।।

( किरा. 2/50 )

व्याकरणेऽपि दृश्यते वक्ष्यमाणत्यत्र टित्त्वोगित्त्वोभयशक्तिसम्पन्नस्य स्थानिवद्भाव सहकृतस्यङीब् विधायकस्य स्थानिवद् भावनिषेधोपजापेन प्राप्तिर्वार्यते अजादिपाठमाकृतिगणत्वादुपकल्प्य वा वार्यते इत्थं सन्ध्यादिपरिकल्पनविवेकसाम्यमुभयत्र राजनीतौ व्याकरणे च विद्यमानं विलोक्य महाभाष्यं वा पठनीयं महाराज्यं वा पालनीयमिति कथनमक्षरशः सत्यं महाभाष्येणैव तादृशस्य विवेकस्योपलब्धेः ।

किञ्च राजनीतौ कस्यचिन्नियमस्य बहुजनोपकारकस्य बहुजनसुखकरस्य प्रयोगेणाल्पिष्ठा दोषा अपि आपतन्ति तथापि बहुजनहिताबहत्वात्त स्वीक्रियन्ते दोषाणां निवारणाय च यत्ना विधीयन्ते अतएव कुल्यादिनिर्माणं नोपेक्ष्यते महाभाष्येऽपि 'सन्निपात' प्रातिपदिकग्रहणादिपरिभाषास्वीकारेण बहूनामिष्टप्रयोगाणां सिद्धिमुत्प्रक्ष्य ताः स्वीकरणीयाः प्रतिविधेयं च दोषेष्वित्युच्यते नहि मृगाः सन्तीति यवा नोप्यन्ते तेषां निवारणाय प्रयत्नो विधीयते इत्यादिना । महाराज्यं पालयता सुराज्ञा नियमोऽयं सर्वदाऽश्रीयते ।

'व्याख्यानतो विशेषप्रतिपत्तिर्नहि सन्देहादलक्षणम्' इति कथनं राजनीतौ व्याकरणे च सर्वतोभावेनोपादेयम् । अन्यथा संक्षिप्तस्यार्थगरीयसो राजनीतिवाक्यस्य व्याकरणसूत्रस्य च तात्पर्यनिर्णयोऽसंभव एव । व्याख्यानेनापि शास्त्रद्वयमिदं दुर्मेधसा नावगन्तुं शक्यते अतो महाराजेन शाब्दिकेन सुमेधसा भवितव्यम् । अतएव व्याकरणतत्त्वप्रतिपादकं स्वकाव्यमुद्दिश्य भट्टिर्लिखति—

व्याख्यागम्यमिदं काव्यमुत्सवः सुधियामलम् ।
हता दुर्मेधसश्चास्मिन् विद्वत्प्रियतया मया ।।

राजशास्त्रवचांसि क्वचित् स्पष्टानि क्वचिदस्फुटानि क्वचिन्मिथो विरुद्धानि च दृश्यन्ते । तत्र गुरुमुखेनैवोपादेयतानुपादेयता च निर्णेतुं शक्येते । अतएवोच्यते वाराङ्गनेव नृपनीतिरनेकरूपा । यत्र मिथो विरुद्धानि वचांसि भवन्ति तत्र तत्र प्रतिपाद्यार्थनिर्णयाय यथा तस्य भूरिपरिश्रमेण परिशीलनमपेक्ष्यते तथा महाभाष्येऽपि कोक्तिः सिद्धान्तिनः का चैकदेशिन इति ज्ञानं पातञ्जले महाभाष्ये कृतभूरिपरिश्रमेण नागेशसदृशविदुषैव कर्तुं शक्यते । श्रूयते तेन महाभाष्यमष्टादशकृत्वो गुरुमुखादधीतमिति । अतएव स महाभाष्यसम्राडुच्यते सर्वतन्त्रस्वतन्त्रोऽद्वितीयो वैयाकरणो मन्यते च ।

अन्ये व्याख्याग्रन्था भाष्यपदवाच्याः पातञ्जलं चेदं महाभाष्यम् । तत्र कारणं लिखति पुण्यराजः "कृतेऽथ पतञ्जलिना गुरुणा तीर्थदर्शिना । सर्वेषां न्यायबीजानां महाभाष्ये निबन्धने । अलब्धगाधे गाम्भीर्यादुत्तानः शब्दसौष्ठवात् । इति व्याख्यावसरे वाक्यपदीयटीकायां स्वकीयायाम्" तच्च भाष्यं न केवलं व्याकरणस्य निबन्धनं यावत् सर्वेषां न्यायबीजानां बोद्धव्यमित्यत एव सर्वन्यायबीजहेतुत्वादेव महच्छब्देन विशिष्य महाभाष्यमित्युच्यते लोके इति । अत्र सर्वे न्यायाः, लौकिकाचाराः, शास्त्रीयकर्तव्याकर्तव्यनिर्देशाः, वस्त्रनिर्माणप्रकाराः, कृषिविधिः, अदेवमातृकदेवमातृककृषिप्रकारः कर्षकलक्षणं कर्षकऋणविधिः, कृषिकर्मणि उपादेयानि साधनानि गवादीनामुपचारः क्षेत्रपरीक्षणरीतिः क्षत्रमितिः धान्यमूल्यम् धान्यसंचयोपायः ग्रामनगरादिविभागः, मार्गप्रबन्धः, वैद्यकप्रबन्धः रोगप्रतिबन्धकदृष्टादृष्टोपायाः, जातिलक्षणं तद्भेदाः सामाजिकव्यवहारः विद्यार्थिशीलम्, राज्ञः कर्तव्यम् राजकरः प्रमाणपरिमाणभेदाः स्त्रीसम्माननम् इत्यादिकं सर्वं प्रतिपादित मेतं ग्रन्थमधीयद्भिर्विर्लोकं विलोकं ज्ञानकोशीक्रियन्ते स्वप्रतिपत्तयः । महाभाष्योदाहरणेषु विद्याः कलाः सर्वविधाचारा श्चोपलभ्यन्ते । अत्र व्याकरणस्य दार्शनिकपक्षः व्युत्पत्तिपक्षश्च सर्वतोभावेन प्रतिपादितौ स्त एव ।

इत्थं महाराज्यपालनं यथा सुखयति योग्य राजानं अयोग्य मसेवित शास्त्र-त्यागिमन्त्रिगुरुबहुज्ञं दुःखाकरोति तथैव महाभाष्यमिदमप्यज्ञमसेवित गुरुचरणमशरणीकृत परिश्रमं दुःखाकरोति सुमेधसंचानन्दयति अतः साधूच्यते—

महाभाष्य वा पठनीयं महाराज्यं वा पालनीयमिति ।।

□

# पाणिनेः शब्दार्थज्ञापनकौशलम्

पं० सूर्यनारायण शास्त्री

सेवानिवृत्तः प्राचार्यः, प्राच्य विद्यापीठम्
शाहपुरा बाग, जयपुरम्

आश्रित्य तन्त्राणि महान्ति प्राचाम्,
विहाय तन्त्रान्तर संस्थदोषान ।
अकालकं शास्त्रमतीवरम्यम्,
येनर्षिणोक्तं तमिह प्रपद्ये ।।1।।
येनाष्टकं वै गृथितं स्वबुद्धया,
अध्यायपादैः सुविभक्तरूपम् ।
गूढार्थकैः सूत्रचतुः सहस्रैः
शालातुरीयं तमहं नमामि ।।2।।

भगवता पाणिनिना विरचितो ऽष्टाध्यायी, नामापूर्वो-ग्रन्थमणिः शाब्दिक मति निकषायमाणो राजते लोके, यमाश्रित्य शतशो ग्रन्था रचिताः प्राच्यै नव्यैश्च शाब्दिकैः विरच्यन्ते चाधुनिकैः। अत्र ग्रन्थरचनाकला निजपरांकाष्ठां प्राप्तेति दृश्यते । एतद्ग्रन्थरचनायामाचार्येणानेकसूक्ष्म विचित्रकौशलानां प्रयोगो विहितः। एतत्प्रशंसायामुक्तं स्वयं भाष्यकारेणापि– (3/1/19) एवमर्थं खल्वपिआचार्यश्चित्रयति क्वचिदर्थान् आदिशति क्वचिन्नेति । चित्रमतीत्यस्य अनेक मार्गमाश्रयतीत्यर्थकैयटेन विहितः ।

एतद् ग्रन्थ प्रणयने शाब्दिक लाघवस्य रीतिराचार्येणाऽङ्गीकृता। अत्यधिक शाब्दिक लाघवचेष्टयैव क्वचिद् २ शब्दार्थेऽस्पष्टता ऽसामञ्जस्यतादि दोषाः संभवन्ति, तन्निराकरणाय पाणिनिना एतादृशकौशलान्याविष्कृतानियैः शब्दार्थ-ज्ञानेकाऽपि बाधानोपजायते । यत्र विवक्षितार्थबोधस्या-संभावना प्रतीयते तत्रापि यथार्थ शब्दबोधो जायते ।

व्याकरणशास्त्रेचैषां कौशलानामसाधारणो महिमा । तथा साहित्यरसिकानांकृते चैषां ज्ञानमपरिहार्यं वर्तते । निबन्धेऽस्मिन् पाणिनेः तेषामेवार्थनियामक कौशलानां-संक्षिप्तपरिचयः प्रस्तूयते ।

श्रीभर्तृहरिणावाक्यपदीये पद्य द्वयमर्थ नियामकतायामुक्तम्-
संयोगोविप्रयोगश्च साहचर्यं विरोधिता ।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः ।।1।।
सामर्थ्यमौचितीदेशः कालोव्यक्तिः स्वरादयः ।
शब्दार्थस्याऽनवच्छेदे विशेषस्मृति हेतवः ।।2।। इति

1. तत्र संयोगस्य नियामकतोदाहरणम् 'अवाद्ग्रः (1/3/51) इतिसूत्रम् अत्राऽवोपसर्ग संयोगात्' गृ निगरणे इत्यस्यैव-धातोर्ग्रहणम न तु गृ उपदेशे, इत्यस्य ।

2. भुजोऽनवने 1/3/66 । इतिसूत्रेच विप्रयोगात् कौटिल्यार्थक भुजधातोर्ग्रहणं न भवति ।

3. विपराभ्यां जेः 1/3/19 । इतिसूत्रेच वि साहचर्यात् परा, इत्युपसर्गस्यैव ग्रहणं न तु विशेषणभूतपराशब्दस्य । साहचर्य बलेनाऽर्थज्ञापनं प्रायः सर्वत्राऽष्टाध्याय्यां दृश्यते यथा च भूवादयो धातवः 1/3/1 । इतिसूत्रे वा शब्दसाहचर्यात् असत्ववाचिनोभूशब्दस्य ग्रहणं भवति न तु भूमिवाचकस्य । तथैव 'कुगति प्रादयः 2/2/18 । इतिसूत्रे गत्यादि साहचर्येण कुत्सितार्थक कुशब्दस्य ग्रहणं भवति, न तु– भूमिवाचक कुशब्दस्य एवं साहचर्यबलेन शब्दार्थयोर्बहुविध नियमन-स्योदाहरणानिग्रन्थेऽत्र दृश्यन्ते ।

शब्दानां परस्पर साहचर्येणाऽपि पाणिनिनाऽनुक्तार्थानां ज्ञापनं विहितम् । यथा– पूर्वकालैक सर्वजरत्पुराणनव-केवलाः समानाधिकरणेन 2 / 1 / 49 अत्र नव शब्दो

नूतनार्थकः नव संख्यार्थश्च । कस्यात्र ग्रहणमिति प्रश्ने ? पुराण शब्देन सह पठितो नव शब्दः नवीनार्थ वाचक एव गृह्यते, न तु संख्या वाचकः । तथैव पणपादमाषशताद्यत् 5/1/34 । इतिसूत्रे पण-माष शब्दसाहचर्यात् पादशब्दः परिमाणविशेषवाचक एव गृह्यते, न तु चरणवाची ।

4. **बहुवचनप्रयोगस्वार्थ नियामकता:** – सूत्रकारेण बहुवचन बलेनाऽनेकत्र अभीष्टार्थं ज्ञापनं कृतम् । यथा– मद्रेभ्योऽञ् (4 2/109) । इतिसूत्रमस्योदाहरणम् । मद्रशब्दोभद्रपर्यायः, मद्रजनपदवाचीच । अत्र पाणिनिना बहुवचनस्य प्रयोगः जनपद वाचिनो ग्रहणार्थं कृतः, तेन भद्र पर्यायवाचिनो ग्रहणं न भवति ।

एवमेव स्वाङ्गेभ्यः प्रसृते 5।2।66 सूत्रेऽपि पाणिनेः स्वाङ्ग पदस्य बहुवचने प्रयोगो ज्ञापयति यन्नायं शब्दः केवलं 'स्वाङ्गवाची अपितु स्वाङ्गसमुदाय-वाच्यपि । तथैव पूर्वैः कृतमिनयौ च 4/4/133 । इतिसूत्रे पूर्वशब्दस्य बहुवचनं ज्ञापयति यदत्र पूर्व शब्दस्यार्थः पूर्व-पुरुष अस्ति एवमनेकत्राऽष्टाध्याय्यांमर्थप्राधान्यबोधक बहुवचनस्य प्रयोगोविहित इति पूर्वोदाहरणैर्ज्ञायते ।

5. क्वचित् बहुवचननिर्देशेन पर्यायस्यापि ग्रहणं भवति । यथा– जेप्रोष्ठपदानां 7/3/18 । इतिसूत्रे प्रोष्ठपदानामिति बहुवचन निर्देशात् पर्यायोऽपि गृह्यते । भद्रपाद इति । क्वचिद् बहुवचनमविवक्षितमपिभवति । यथा– अपस्पृधेथामानृचुरानृहुश्चियुषेतित्याजश्राताः श्रितमाशीराशीरार्ताः 6/1/36 । अत्र श्राता इति बहुवचनमविवक्षितम् । तेन-यदि श्रातो जुहोतन, इत्येकवचनस्योपसंग्रहः । एवं बहुवचनेन क्वचिच्छब्दस्य क्वचिदर्थस्य नियमनं भवति । सामान्यार्थक शब्देन विशेषार्थग्रहणमपि बहुवचनेन ज्ञाप्यते । यथा– होत्राभ्यश्छन्दसि 5/1/135 । इति सूत्रे ऋत्विग्वाची होत्रा शब्दः बहुवचने प्रयुक्तः ऋत्विग्विशेषं ज्ञापयति ।

6. उत्तरसूत्रगतशब्दस्यार्थविशेषज्ञापने पूर्वसूत्रोक्तशब्दोऽपिसहायकोभवति । यथा– अभिजनश्च 4/3/90 । इति सूत्रेऽभिजनशब्देन पूर्वबान्धवाउच्यन्ते (प्रदीपः) "सोऽस्य-निवासः 4/3/89 । इति पूर्वं सूत्रगत निवास शब्द साहचर्येण पूर्वपुरुष वासभूमिरूपार्थ एव गृह्यते, न तु पूर्व बान्धवरूपः ।

7. **निपातन रीति** :– विशिष्टार्थ द्योतनाय निपातन सूत्राणां रचनाऽपि विहितास्ति । यत्र पाणिनिः किमपि पदं निपातनेन साधयति तत्र तत्पदं प्रायेण विशिष्टार्थं वाचकं भवति । यथोक्तं न्यासे-निपातनं रूढ्यर्थम् । निपातनस्यैतत्प्रयोजनमप्यस्ति । यथा– भोज्यं भक्ष्ये 7/3/69 । इति-सूत्रे भोज्य शब्दो निपातितः अभ्यवहार्यरूपभक्ष्यार्थ एव प्रयुज्यते न तु पालनीय भक्ष्यार्थे । तथैव 'षष्टिकाः षष्टिरात्रेणपच्यन्ते 5/1/90 । इतिसूत्रेषष्टिका शब्दो निपातितः शालि विशेष एव प्रयुज्यते, न तु मुद्गेषु । यद्यपि तत्रापि षष्टिरात्रपाच्यत्वमस्ति । निपातन हेतुकार्थ नियमनस्यानेकान्युदाहरणानि पाणिनीय तन्त्रे मिलन्ति ।

8. **पूर्वोपात्तपदस्थापनम्** :– क्वचित् सूत्रकारेण विशिष्टार्थ ज्ञापनाय पूर्वसूत्रानुवृत्तपदस्य पुनः प्रयोगो विहितः । यथा– देवताद्वन्द्वे च 6/3/26 । इति सूत्रमस्य विशिष्टोदाहरणम् । अत्र पूर्वसूत्रात् ( आनङ् ऋतो द्वन्द्वे 6/3025 ) द्वन्द्वे पदस्यानुवृत्तौ सत्यामपि पुनः द्वन्द्वे पद ग्रहणमेतज्ज्ञापयति यदत्र साधारणसाहचर्यं विहाय लोकवेदयोः प्रसिद्ध साहचर्य मेव गृह्यते । मित्रावरुणौ, ब्रह्मप्रजापतीत्यादेरेव ग्रहणम् । शब्दलाघवेन सहार्थनियमनस्येदं कौशलं सूत्रकारस्य महतीं बुद्धि परिचाययति ।

9. **विशिष्टशब्दसंयोजनमपि** :— क्वचित्सूत्रकारो विशिष्टार्थ ज्ञापनाय तच्छब्देनसह आख्यानामादि शब्दानां प्रयोगं विधत्ते । अयमधिक शब्द प्रयोग एव ज्ञापयति यदयं विशिष्टार्थे प्रयुक्तः व्यवहृतश्च । यथा– 'प्रकाशन स्थेया-ख्ययोश्च 1/3/23 । इतिसूत्रे स्थेयशब्द एव पर्याप्त आसीत् । तत्रापि सूत्रकारेणाऽऽख्याशब्दस्य प्रयोगः कृतः । काशिका-कारानुसारं विवादपदनिर्णेतालोके स्थेय इति प्रसिद्धः तद्बोधार्थमेवात्राऽऽख्यापदग्रहणम् । एवमेव 'कर्मण्यग्न्या-ख्यायाम् 3/2/92 । इतिसूत्रोक्त आख्याशब्दो रूढ्यर्थकः, अग्न्याधारस्थलविशेषमाख्याति । तथैववैयाकरणाख्यायां चतुर्थ्याः 6/3/7 । इतिसूत्रेऽपि वैयाकरणसंव्यवहार-सिद्धताऽऽख्या शब्देन ज्ञाप्यते ।

10. वचनशब्दप्रयोगोऽपि अर्थविशेषस्य ज्ञापकः । यथा– 'भाववचनाश्च 3/3/11 । इतिसूत्रे वचन ग्रहणेन लोक प्रसिद्धं वाचकमवगम्यते । एवमेव 'द्वन्द्वं रहस्यमर्यादा-वचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिसु 8 1/15 । इति सूत्रोक्त मर्यादा वचन शब्दोऽस्य नियमस्यैक मुदाहरणम् । अत्र जिनेन्द्रेणोक्तम् – वचन ग्रहणं शब्दो-पात्तायां मर्यादायां यथा स्यात्, अर्थप्रकरणादिना गम्यमानायां मा भूत् ( न्यास ) इति वचनशब्दग्रहणेन ज्ञापितम् ।

11. एकस्मिन् प्रकरणे कस्यचित्पदस्यैकाधिकस्थलेषु पाठः तत्पदस्य विशेषार्थे शक्ति गमयति । यथा– विभाषा हविरपूपादिभ्यः 5/1/4 । इति सूत्रमस्योदाहरणम् । अत्र हविष्शब्दःहविर्विशेषस्यवाचकः, न तु हविः सामान्यस्य । अस्मिन्नेव प्रकरणे 'उगवादिभ्योयत् 5/1/2 । इतिसूत्रे गवादिगणे हविः शब्दस्य पाठात् स्वरूपग्रहणाच्च विभाषा हविरित्यत्र हविर्विशेष वाचि ग्रहणम् (प्रदीपः) ।

12. समासाऽभाव :–क्वचित् समासयोग्यस्थले समासाऽभावो-ऽपि विशेषार्थं गमयति । यथा– 'संख्यायागुणस्य निमाने मयट् 5/2/47 । इतिसूत्रमस्योदाहरणम् । अत्र लाघवाय गुणस्यनिमाने, इत्यस्यस्थाने' गुण निमाने, इति पाठोऽपि कर्तुं शक्यते स्म । परमत्र पाणिनिना समासयुक्त पाठम-कृत्वा ज्ञापितं यदत्र गुणस्यैकत्वं विवक्षितमस्ति । द्वित्वादि संख्याविशिष्ट गुणे एतत्सूत्रस्य प्रयोगो न भवती-त्यर्थतेनेह न भवति–त्रयोयवानां भागा निमानमनयोरुद-श्विद्भागयोरिति । वस्तुतोयत्र संख्या विवक्षिताऽस्ति तत्र संख्यारक्षार्थं समासो न विधीयते । दृष्ट्याऽनयाऽन्यत्रापि असमस्त स्थलेषु गूढार्थो ज्ञातुं शक्यते ।

13. पर्यायशब्दस्यैकत्र प्रयोगोऽपि क्वचित्पदस्य विशिष्टार्थ-ज्ञापयति । यथा– 'मति बुद्धि पूजार्थेभ्यश्च 3/2/188 । इति सूत्रे मतिबुद्धिशब्दावेकार्थो, अतो व्याख्यातं कौमुद्याम्मतिरिहेच्छा, बुद्धेः पृथगुपादानात् । एवमेव 'क्रतुयज्ञेभ्यश्च 4/3/68 । इति सूत्रमप्यस्यापरमुदा-हरणम् । अत्र क्रतुयज्ञशब्दयोः पर्यायवाचिनोर्ग्रहणं व्यर्थम् । परमत्रोमयग्रहणमर्थ विशेषद्योतनार्थमिति व्याख्यातम् । सोमसाध्ययागेषु एतौ प्रसिद्धौ, तत्रान्यत-रोपादानेन सिद्धे, उभयोरुपादानसामर्थ्यात् असोमका अपीह गृह्यन्ते । अतः असोमकयज्ञस्यापि सूत्रे ग्रहणार्थं सोमसाध्य यागवाचिनोरुभयोर्ग्रहणम् ।

14. अधिक शब्द प्रयोगेणापि क्वचित् विशेषार्थो ज्ञाप्यते । यथा– 'दिक्शब्दा ग्राम जनपदाख्यान चानराटेषु 6।2।103 । इति सूत्रमस्योदाहरणम् । अत्र केवलदिक् कथनमेव पर्याप्तमासीत्, दिक् शब्द ग्रहणस्य किं प्रयोजनम् ? अत्र कालवाचिदिक् शब्दस्यापि ग्रहणार्थं शब्दपदस्य प्रयोगो विहितः । केवल दिग्वाचि शब्दस्य ग्रहणं मा भूत् । इदमेकमसामान्यं कौशलमाचार्यस्य अधिक शब्द प्रयोगेणा-ऽधिकार्थावबोधनम् । शब्दाधिस्यादर्थाधिक्यमिति प्रसिद्धो नियमः । एकोऽयं नियमः प्रमाणयति यत् संस्कृतभाषायाः प्राचीन ग्रन्थानां यथार्थज्ञानाय भाषा प्रकृतेः कियद् व्यापकं परिज्ञानमपेक्षितमस्ति । अस्यान्यदुदाहरणम्— 'दिक् शब्देभ्यो सप्तमी पंचमी प्रथमाभ्यो दिग्देशकालेष्वस्ताति 5/3/27 । इति सूत्रमपि । अत्र कैयट :—दिशां शब्दाः दिक् शब्दाः ये रूढ्या दिशो वाचकाः पूर्वादयस्ते गृह्यन्ते, न तु ऐन्द्रयादयोयौगिकाः (प्रदीपः) अत्र शब्द, शब्देनेदं विशिष्टं तथ्यं ज्ञाप्यते ।

15. इति शब्दस्य प्रयोग :—विवक्षानुसारि प्रयोगस्य साक्षा ज्ज्ञापनाय सूत्रकारस्येयमति प्रियाशैली । तद्धिते समासेचास्य कौशलस्यानेकान्युदाहरणानि सन्ति । यथा– 'तदस्यास्त्य-स्मिन्निितिमतुप् 5 3 94 । सूत्रेऽस्मिन्निति शब्दो ज्ञापयति यत् केवल साधारणास्तित्वमात्र एव मतुप्प्रत्ययो न भवति, प्रत्युत भूमनिन्दा प्रशंसा नित्ययोगाद्यर्थेषु गम्यमानेस्वेव मतुप्प्रत्ययो भवति । इति शब्द बलेन पाणिनिनाऽत्र 'अस्तित्वस्य नियमनंविहितम । तथा– यवमात्रे सत्येव कश्चिद्यवमान् न कथ्यते, नापि च रूपेसत्येव कश्चिद् रूपवान् उच्यते । अपि तु यवाधिक्य स्वामित्व एव यवमान्–प्रशस्तरूप एव रूपवान् गदितुं शक्यते । यद्यपि नेदं साक्षादर्थ नियमनम्, अपितु विवक्षानियमनम्, तथापि विवक्षाया अप्यर्थविशेषत्वादुदाहृतम् । 'तदस्य तदस्मिन् स्यादिति 5 1/16 । सूत्रगत इति शब्दोऽपि विवक्षाज्ञापकः, इति शब्दो लौकिकीं विवक्षामनुसारयति । शिष्टप्रयोगगत विवक्षायाः प्रकृतिमवगत्यैवास्य सूत्रस्य प्रयोगः करणीय इत्यर्थः । एवमष्टाध्याय्या अनुशीलनेन पूर्वाचार्य प्रसिद्धाया एतादृश्यागूढरीतेः परिचयोलभ्यते, यस्या उपादेयताऽर्थ-ज्ञानायाऽसाधारणीवर्तते । अनुसन्धाने कृतेऽन्यरीतीनामपि-ज्ञानं भवितुमर्हतीति दिक् ।।1।।

# अखिल भारतीये संस्कृत कवि सम्मेलनः समस्यापूर्ति

सम्मेलन द्वारा अपने चतुर्दश महाधिवेशन के अवसर पर प्रथम दिन दिनांक 5 मई, 1986 को रात्रि 8 बजे अखिल भारतीय संस्कृत कवि सम्मेलन के अन्तर्गत 'समस्यापूर्ति' मूलक कविसम्मेलन आयोजित किया गया। इसमें राजस्थान के अतिरिक्त राजस्थान से बाहर के ख्याति प्राप्त संस्कृत कवियों ने भाग लिया। कवियों की समस्यापूर्तियाँ अत्यन्त रोचक व अनूठे भावों से परिपूर्ण थीं।

इस आयोजन के श्री भवानी शंकर त्रिवेदी-दिल्ली अध्यक्ष रहे, श्रीकलानाथ शास्त्री, निदेशक भाषा विभाग राजस्थान ने इस कार्यक्रम का संयोजन किया। मुख्य-अतिथि-डॉ. वासुदेव कृष्ण चतुर्वेदी-मथुरा रहे। इसमें कवियों ने अपनी समस्या-पूर्तियां निम्नानुसार की :—

## कमला

नरोभद्रं पश्येदवगुणनिधानोऽपि विकलः
अमन्दानन्दं वै भजति धनहीनोऽपि जरठः।
गुणी वाग्मी विद्वान् भवति भुवनेष्वेक विनयी
प्रसादाद्यस्या वै जगति जयतात् सा हि 'कमला'॥
अखण्डं पुण्यानां फलमिह तु भोक्त्री सुकृतिनी
'विराटक्षेत्रं' जेत्री सरसिजसुनेत्री कुशलिनी।
पृथुस्तोत्री श्रोत्री बहुलपदयोक्त्रीति मुदिनी
गुणानां संधात्री जनविनयपात्रं हि 'कमला'॥

**—रतनलाल शर्मा मनोहरपुर, (जयपुर)**

## 2

विराट्क्षेत्रे ह्यस्मिन् पुनरपि पुनर्या विजयिनी
निजैः सेवाकार्यैः जनगणमनःसुप्रणयिनी।
लसद्वेणीयुक्ता कलिमलविमुक्तास्यकमला
ददाना सद्भाग्यं भवतु भवतामाशु 'कमला'॥

**—गुलाबचन्द्र 'पाटलेन्दु, नायन, (जयपुर)**

## 3

शान्तात्मापि प्रचला
राजभवनसंस्थिता विमला।
राजस्वेन हि सबला
भाति सम्मेलने सैव 'कमला'॥
शान्ताकृतिश्च सकला
सुरभारतीसेवने वै विमला।
यजमानार्थैः प्रबला
मण्डपे भाति सैव 'कमला'॥
विदुषीं कमलां वन्दे संघाध्यक्षमहोदयाम्।
शिक्षामात्यं तथा हीरालाल-विज्ञं च सादरम्॥
आयाते जयपत्तने शुभदिने गीर्वाणवाणीमहे
मोतीलालमहोदयैर्विरचिते वेदादि सम्मेलने।
सेवाव्यस्तकलादिनाथविदुषां सद्दर्शनं सौख्यदं
मुख्यं जोशिमहोदयं च 'कमलां' वन्देऽत्र विद्वद्गणम्॥

**—डॉ० वासुदेवकृष्ण चतुर्वेदी, वृन्दावन**

## 4

कमलं 'कमला' न स्यात्
कस्मै कस्य हेतवे।
केन कस्माच्च कस्मिश्च
विमला निर्मलाऽमला॥

**—डॉ० सुधाकराचार्यः, मेरठ**

## 5

जयपुरवसतिर्विकसितविभवा
विहरत मुदिताः प्रहरणकलिकाः।
इह रससदनामभिनवमदनां
सुललितकवितां कलयति 'कमला'॥
सारस्वतं विलासं
सहते श्रीर्नेति दर्शनं वितथम्।
सारस्वतीं सपर्यां
यतोऽत्र कुरुते स्वयं 'कमला'॥

**—उमाकान्त शुक्ल, मुजफ्फरनगर**

## 6

संस्कृतं संस्कृतेर्मूल–
मिति सम्यग् विचार्य या ।
सक्ता तद्रक्षणे वृद्धौ
विजया 'कमला' जयेत् ।।
वहन्ती सर्वकारस्य
पदं राजस्वमन्त्रिणः ।
राजस्थान प्रदेशस्य
सैषा 'कमला' विराजते ।।
वदन्ती विदुषां गोष्ठ्यां
सत्यं प्रियहितं वचः ।
विमलाचरणैः स्वीयै–
विख्याता 'कमला' जयेत् ।।
दिशन्ती सुरभारत्या
मार्गमुन्नतिकारकम् ।
सम्मेलन शुभाऽध्यक्षा
'कमला' नो विराजताम् ।।
बाह्याभ्यन्तरयोः शुभ्रा
'कमला' विचलास्ति या ।
प्रबला कार्यसंसिद्धौ
'कमला' नो विराजताम् ।।
मञ्चसञ्चालने दक्षा
निपुणा भाषणेष्वपि ।
विदुषी मार्गदृष्ट्री च
'कमला' कमलायते ।।
कार्यसम्पादने व्यग्रा
जनस्य शासनस्य च ।
मृदुलैषा सभानेत्री
'कमला' नो विराजताम् ।।
संलग्ना संस्कृतोन्नत्यै
मनोवाक्कायकर्मभिः ।
प्रत्यक्षा भारती सैषा
श्रीमती 'कमला' जयेत् ।।
राजस्थाने च राष्ट्रे च
संस्कृतोन्नयने रता ।
प्रेरिका सत्प्रवृत्तीनां
राजतां कमला' चिरम् ।।
विद्वद्वरेण्यवृन्दानां
सम्मेलनमुपेयुषाम् ।
वचोभिराशिषामेभिः
संस्तुता 'कमला' जयेत् ।।

**—डॉ० भवानीशङ्करत्रिवेदी, दिल्ली**

नरैः सेव्या निः स्वैः परमपुरुषस्य प्रणयिनी
विशिष्टा मन्त्रित्वे सुरमधुरवाणी हितकरी ।
विभातात् 'राजीव' प्रकृतिसुरभिप्राप्तपदका
सुराज्य-स्वर्गश्रीसचिवपदभोक्त्रीह 'कमला' ।।

**—मोहनलाल पाण्डेय, अजमेर**

## 7

वदनसंजितवृत्तविधुर्वरा
स्मितमुखी मृदुला वरवर्णिनी ।
हरति कस्य[5] न हृत्कमलालया[2]
सकमला[3] 'कमला'[1] कमलाभया[4] ।।
वदनवर्णविवर्णितवारिजा
विमल[6]वृत्तविधुस्मितशालिनी ।

---

1. कमला लक्ष्मीः वरस्त्री च अध्यक्ष महोदया अपि च कमला । (लक्ष्मीपक्षे)
2. कमलालया कमले जले आलयः सदनं यस्याः सा कमलालया । अध्यक्षा विषये कमला लक्ष्मीः आलये गृहे यस्याः सा कमलालया । "कमला श्रीवरस्त्रियोः" मेदिनी । "कमलं सलिले ताम्रे जलजे क्लोम्नि भेषजे" मेदिनी ।
3. सकमला (लक्ष्मीः) कमलासनत्वात् करधृतकमलत्वाच्च सकमला (अध्यक्षाच) कमलया श्रिया सहिता सकमला धनवतीत्याशयः ।
4. कमलाभया कमलमिव ताम्रमिव या आभा सा कमलाभा तया कमलाभया रक्तवर्णकान्त्येत्यर्थः । अध्यक्षाविषये 'कमलाभया' पदं विशेषणात्मकमेकवचनपरं कमला वरस्त्रीव अथवा श्रीरिव अभया निर्भया निर्भीकेत्याशयः । अथवा कमलायाः लक्ष्म्याः आभा इव या आभा कमलाभा तयेत्यर्थः ।
5. कस्य हृत् हृदयं न हरति अपितु सर्वस्यैव हरति, लक्ष्मीः परन्तु कस्य ब्रह्मण एव हृदयं न हरति लोकमाता लक्ष्मीः विष्णुनाभिः कमलजन्मनो ब्रह्मणः पुत्रत्वान्न हरति । अध्यक्ष महोदयापि ब्रह्मणः पितामहत्वात्पौत्रीभूतेयं कमला युवतिरपि कथं तस्य हृदयं हरति ? अपितु न हरति ।
6. विमलवृत्तविधुस्मितशालिनी विमलः निर्मलः वृत्तः वर्तुलः स विमलवृत्तश्चासौ विधुः चन्द्रः तद्वत्स्मितेन हास्येन शालते या सा विमलवृत्तविधुस्मितशालिनी (लक्ष्मीः) । अध्यक्षा च बिमलं निर्मलं वृत्तं चरित्रं यस्याः सा विमलवृत्ता चासौ विधुरिवस्मितं तेन शालिनी । "वृत्तोऽधीतेऽप्यतीतेऽतिवर्तुलेऽपिवृते मृते । दृढे ऽन्यलिङ्गं वा क्लीवं छन्दश्चारित्र्यवृत्तिषु ।-' मेदिनी ।

विजयतां 'कमला[9]' कमलासमा[8]

ह्यजनता[7] जनतापहराशुभा ।।

अविरतं श्रम एव विशिष्यते

श्रमरता मनुजा मनुजा मताः ।

श्रमहिता महिता कमलामला[10]

श्रमपरं भजते 'कमला'लसा[11] ।।

पुरुषाः ! पुरुषार्थभरं कुरुत

पशवोऽपि वराः श्रमकर्मरताः ।

हरिसन्निभमप्यलसं पुरुषं

**'कमला'**[12] तु कदापि न कामयते ।।

यशसा गुणैश्च धवलो–

ऽस्त्यबलोऽभिजनधी बलोऽपि नाऽकुशलः[13] ।

हतविधिरिह स मतो

यं लोके न कामयते **'कमला'** ।।

प्रयत सदाहृत्कमला

कमलास्यापि[15] प्रफुल्लसुमहास्या ।

गुणगणविमलाऽप्यबला

सबला पदेन राजते **'कमला[14]'** ।।

स्व श्रीन्यक्कृतकमला–

ऽमलकमलाङ्गी निजास्यजित कमला ।

[16]प्रकृतिवरा सुवरोरूरत्नं

विजयतामियं **'कमला'** ।।

साध्यन्तेऽर्थाः सकला[17]

सकला विकला यया विना पुरुषाः ।

[18]हितपुरुषोत्तमसुरूचिः

कस्मै न हि रोचते **'कमला'** ।।

करकमला मुखकमला

पदकमला मधुमधुरहृदयकमला

अब्धिकमलजनिकमला–

समा न किं रोचते 'कमला' ।।

**— सत्यनारायण शास्त्री, अजमेर**

---

7. अजनता (लक्ष्मीः) अजाय विष्णवे नता इत्यजनता । अध्यक्षा च अजः अजाख्यनृप इव नता जनैरित्यजनता । 'अजः छागे हरि-ब्रह्मविधु स्मरहरेनृपे' मेदिनी ।

8. कमलासमा कमला वरस्त्री तया समा सदृशी कमलासमा ।

अध्यक्षा च कमलया लक्ष्म्या समा सदृशी कमलासमा लक्ष्मीतुल्या ।

9. कमला लक्ष्मीः अध्यक्षा च कमला ।

10. कमलामला कमलमिव जलजमिव अमला स्वच्छा कमलामला-लक्ष्मीः । अथवा कमला वरस्त्रीव अमला निर्मलचरित्रा लक्ष्मीः अध्यक्षाकमला च । अथवा अमला सच्चरित्रा कमला अध्यक्षा लक्ष्मीः च ।

11. कमलालसा अलालसा अनिच्छावत्यपि कं भजते ? श्रमपरं जनं भजते इत्याशयः ।

12. कमला लक्ष्मीः वरस्त्री च अथवा अध्यक्षा कमला । हरिसन्निभं विष्णुसदृशं अलसं पुरुषं न कामयते अन्यत्र अध्यक्षा कमलाऽपि हरिसन्निभं सिंहं सदृशं बलवन्तमपि अलसं अकर्मण्यं अकुशलं जनं न कामयते, सर्वत्र कर्मठ जनः प्रशस्यते ।

13. अकुशलः कर्मण्यदक्षः ना मनुजः ।

14. कमला लक्ष्मीः अध्यक्षा च ।

15. कमलास्याऽपि कमले आस्या स्थितिर्यस्याः साकमलास्या कमला-सनस्था लक्ष्मीः । कमलाया लक्ष्म्या आस्यमिव आस्यं यस्याः सा कमलास्या अध्यक्षा । कमलमिव आस्यं मुखं यस्याः सा कमलास्या अध्यक्षाच । अबला सबला विरोधः । अबला नारीसत्यपि लक्ष्मीः अध्यक्षा च पदेन विष्णुपत्नीपदस्थित्या सबला बलवती । अध्यक्षा च मंत्रि पदस्थित्या सबला बलवती ।

16. प्रकृतिवरा प्रकृत्यावरा प्रकृतिवरा, प्रकृतिश्चासौ वरा प्रकृतिवरा प्रकृतिर्लक्ष्मीः । "गणेशजननी दुर्गा राधा लक्ष्मीः सरस्वती । सावित्री च सृष्टिविधौ प्रकृतिः पंचधामता ।। देवीभागवते ।। प्रकृतिः चासौवरा प्रकृतिवरा । प्रकृतिषु मंत्रिषु वरा प्रकृतिवरा, प्रकृतौ पौरवर्गेवरा प्रकृतिवरा अध्यक्षाकमला । प्रकृतिर्गुणसाम्ये स्यादमात्यादिस्वभावयोः । यौनौलिंगे पौरबर्गे । मेदिनी ।

17. सकलाः सर्वे सकलाः कलावन्तः कवयितार अपि विकला विन-ष्टकला दुःखिनः विक्लवाः ।

18. हितपुरुषोत्तमसुरूचिः लक्ष्मीस्तु हिता धृता । 'दधातेर्हि" निष्ठायां रूपं पुरुषोत्तमे विष्णौ सुरूचिः अभिष्वंगः अत्यन्तासक्तिः प्रेम संपर्कोवा । अध्यक्षा च हिता इव सुहृद इव ये पुरुषोत्तमा उत्तम-पुरुषास्तेषु सुरुचिः स्पृहा यस्याः सा हितपुरुषोत्तमसुरुचिः । "रुचिः स्त्री दीप्तौ शोभायामभिष्वंगाभिलाषयोः । मेदिनी ।

## 8

देवगिरः संवृद्धौ स्वसंस्कृतेरुन्नतौ कृता या सा ।
सम्प्रति संस्कृतसम्मेलनाध्यक्षत्वेन शोभते 'कमला' ।।

**—कलानाथ शास्त्री, जयपुर**

## 9

लक्ष्मीस्तु कमला प्रोक्ता
कमलासनशोभिनी ।
सैव हंसासना जाता
सम्मेलन - सरस्वती ।।
चार्वङ्गि चन्द्रगौरा
चञ्चला कालिमामवाप्येयम् ।
कमला करवञ्चकेषु
कृष्णा जाता कथमार्या ।।

**—नटवरलाल जोशी, लक्ष्मणगढ़**

## 10

भुवि कमलायाः सहायतया विद्वांसः उन्नतिं प्राप्नुवन्तीति प्रशंसां वैकुण्ठे श्रुत्वा खिन्ना लक्ष्मीः विचारयति–

क्षीरसमुद्रनिवासिनी या
कल्याणं विदधातु लोके सा 'कमला' ।
चरणशरणभयहारिणी दुःखदारिणी या
सुखराशिं सकलेभ्यः वितरतु सा 'कमला' ।
दारिद्र्यौघविनाशिनी शुभकारिणी या
अनुग्रहं प्रददातु साऽस्मभ्यं 'कमला' ।
सेव्या सुमतिविकाशिनी मतिमोहिनी या
रक्षतु भक्तजनान् हि लोके सा 'कमला' ।।
द्रोहो मे ख्यातो शारदया
तद्भक्तो रहितो मे दयया ।
कथमाप्ता मम नाम्ना विपुला
आश्रयतेति सुखिन्ना 'कमला' ।।

**—रामकुमार दाधीच, जयपुर**

टिप्पणीः=लक्ष्मीः/राजस्थान राजस्वमन्त्री कमला

## 11

घनं ध्वान्तं व्याप्तं परित इह दुर्दैवजनितं
वसन्त्येते घूकाः प्रतिविटपशाखासु सततम् ।
कथं वै दारिद्र्यं तदपि भुवनेऽत्राद्य वसति
विहायोलूकं किं भजति गरुडं साऽद्य 'कमला' ।
कृतो यैस्तातोऽस्या जलधिरुदरे क्रोधविवशैः
पदाघातैर्भर्ता वपुषि कुपितैश्चाप्यवमतः ।
प्रिया येषां नित्यं यदरिपदवी भागपि गिरा
मनस्तेषां चित्रं सदसि कुरुते साऽद्य 'कमला' ।।

**—श्रीराम दवे, जोधपुर**

## 12

मामन्तरा महत्वन्न
पुरुषस्य विपश्चितः ।
न किमपि शक्यते कर्तुं
नम्यते 'कमला' मया ।।
जगन्नाथोऽपि चैकाकी
यां विना न महीयते ।
जनश्रेयोविवृद्ध्यर्थं
सा 'कमला' ह्यत्र शोभताम् ।।
राजस्थानप्रदेशस्य
मन्त्रिपदमलङ्कृता ।
सम्मेलने प्रधानस्य
पदे शिक्षावती शुभा ।।
कमलेव महाभागा
नृपनीतिविशारदा ।
सुशोभिता प्रजाशर्म-
कर्त्रीयं 'कमला'ऽवतात् ।।
अज्ञानदारिद्र्यततीं प्रणाश्य
प्रकाश्य चित्तानि च मानवानाम् ।
सुखं समृद्धिं विदधातु नित्यं
माता समेषां 'कमला' धरित्र्याम् ।
त्वया मातः ! पूर्वं सुरमुनिनराणां शिवकृते
धृतं काले-काले बहुविध शरीरं जलधिजे ।
इदानीं लोभेर्ष्योत्कटकपटरक्षोभयजुषां
नराणां संरक्षां विहितुमुपयाताऽस्ति 'कमला' ।।

**—वैद्य शङ्करलाल शर्मा, फतेहपुर**

## 13

लब्ध्वा नैरुज्यसत्कान्ति
शारदाराधने रता ।
शिक्षोद्यानविभाभास्वत्
'कमला' कमलायताम् ।।

—राधाकृष्ण शास्त्री, जयपुर

## 14

कर्मैव नरजीवन सुभाग्यलिपिरपि जनस्य सुकर्मैव ।
समुपदिशतीह शिक्षा-कमलवननिवासिनी 'कमला' ।।
नवमौक्तिक भा नवहीरक भा:
स्वगुणैर्महिता चरितैर्विमला ।।
हरिरेतु न वैतु परं यदि सा
स्वयमेति तनोति मुदं कमला ।।

—गिरिजा प्रसाद 'गिरीश', जयपुर

## 15

भुवि धन्यतमा जयसिंहपुरी -
यमुरीकृतपाटलपुष्पविभा ।
हरिशासननीतिकलाकुशला
किल यत्र विभात्यमला कमला ।।
सरस्वत्या लक्ष्म्या सह सुविदितं वैरमवनौ
तथा किन्त्वस्माभिर्नहि समनुभूतं जयपुरे ।
यतो विद्यायागे प्रमुखयजमानत्वमभजद्
विधायास्यां गोष्ठ्यां विबुधवरिवस्यां हि कमला ।।

—डॉ० जगन्नारायण पाण्डेय, जयपुर

# राज लीला

वासार्थं यत्र सौधं सुललितवनिता कामकेलिप्रपूर्त्यै
भोक्तुं भोज्यं गरिष्ठं विविधफलरसावारुणो यत्र पातुम् ।
यातायातप्रबन्धे द्रुततरगमनं हेलिकोप्ट्रादियानं
नेतृ़णां तस्कराणामसितधनवतां राजभिद् राजलीला ।।

—मोहनलाल पाण्डेयः, अजमेर

## 2

बहुतरमपि यत्ने द्राक्कृते या न सिद्धि—
र्भवति लघुतया सा रातिचेत्कोऽपि वित्तम् ।
न खलु सपदि कार्यं ह्यन्यथा जायतेऽत्र
प्रसरति मम राष्ट्रे राजलीला विचित्रा ।।

—सत्यनारायणः, अजमेर

## 3

वृन्दादेव्याः परमविशदे प्रांगणे बाललीला
नित्यं चित्रा श्रुतिगणनुता यस्य साक्षी सुवेधाः
तस्माच्छ्रेष्ठा सकलवसुधा प्रांगणे जायमाना
पूर्णानन्दा मनुज नयना राजते राजलीला ।।

—डॉ० वासुदेवकृष्ण चतुर्वेदी, वृन्दावनम्

## 4

वचः प्रधाना करणाऽप्रधाना
स्वार्थे स्वकीये खलु सावधाना ।
आतङ्किता पञ्चनद प्रदेशे
प्रवर्तते सम्प्रति राजलीला ।।

—पं० गुलाबचन्द्रः

## 5

अनुकनखलमास्ते जाह्नवी स्वच्छतोया
न्वधि जयपुरमास्तां मञ्जुगीर्वाणवाणी ।
भुवि भवतु विभूत्यै लोकतन्त्राधिकारो ।
हृदि हृदि यदि लोके राजतां राजलीला ।।

—उमाकान्त शुक्लः, मुजफ्फरनगरम

# कर्मणे

मनसि विचारय मित्र ! किं कर्तव्यं किं कृतम् ।
लब्धं किं मनुजत्वमयि ते ह्यस्मै कर्मणे ।।

रामकुमार दाधीचः, जयपुरम्

## 2

सर्वाण्यवद्यकर्माणि शोकमोहप्रदानि वै ।
तस्मै वयं नमस्कुर्मः स्तुत्याय कविकर्मणे ।।

—रतनलाल शर्मा, मनोहरपुरम्

## 3

प्राबल्यात् परकामिनी सुरमणं जायते नो नर्मणे
देशस्यास्य हितैषिणे नतिरियं वीराय सद्वर्मणे ।
भ्रष्टाचार निरोधनं हि भवताद् राष्ट्रे सदाशर्मणे
वर्धन्तां सकलाजनाः श्रमरताः श्रीभारते कर्मणे ।।
राजतामेकताभावना मानसे,
वर्ततां जन्मभूगौरवं श्रेयसे ।
भ्राजतां भारते भारती वैबुधी,
लीयतां मानसे स्रग्विणी मोहिनी ।
मोदतां सभ्यता मानदा मानवी
द्योततां विद्यया कर्मजा विद्युतिः ।
जायतां संस्कृतं संस्कृतिः शर्मणे
वर्धतां कर्मविद् कर्मणे ।।

—मोहनलाल पाण्डेयः, अजमेरम्

## 4

कश्चिद्विक्रमवाँस्तु कश्चिदबलः कश्चिद्विपश्चिद्वरः
कश्चित्केलिपटुस्तु कश्चिदपरो राज्ये सभासज्जनः ।
लोके कश्चिदकिंचनोऽपरजनः कश्चिद्धराधीश्वरो
येनैकेन कृता अमी नरवरास्तस्मै नमः कर्मणे ।।
कश्चिच्चौरो न्यायशीलश्च
कश्चित्कश्चिद्भिक्षुर्यक्षराडत्र कश्चित् ।
कश्चिद्दुष्टः सज्जनः कश्चिदत्र
हेतोर्यस्य स्यान्नमः कर्मणेऽस्मै ।।
अंगुष्ठमुद्रा मनुजाः कुबेराः भिक्षाशिनो वैश्रवणोपमा वै ।
बलीयसा येन कृता जगत्यां भूयान्नमः कर्मण एव तस्मै ।।
अज्ञास्तु तुरगारूढाः प्रज्ञा भिक्षुसमाः कृताः ।
येनकर्त्रे महच्चित्रं कर्मणेऽस्तु सदा नमः ।।
धनिनो भिक्षुका जाता भिक्षवस्तु धनाधिपाः ।
हेतुना यस्य लोकेऽस्मिन्कर्मणेऽस्तु सदा नमः ।।

—सत्यनारायणः, अजयमेरुः

## 5

येन श्रीगौराङ्गराज्यमभितः संस्थापितं भारते
येन प्रतिभासंयुतापि जनता लोके चिरं निन्दिता ।
येनार्यप्रतिभा स्वराज्य मिलने संप्रेरिता वै पुनः
स्वातन्त्र्येणविभूषिताऽथ सुखदा तस्मै नमः कर्मणे ।।
बापूगांधीजवाहरोऽथ तिलकगंगाधरोगोखले
बाबूबोस सुभाषचन्दभक्तः ढिल्लोशहान्वाजकाः
पन्तश्रीगोविन्द घारनु तथा श्रीमहेन्द्रादयः
संपीडयापि चकार लोकसुखदान् तस्मै नमः कर्मणे ।

—डा० कृष्णकान्त चतुर्वेदीः, वृन्दावनम्

## 6

ब्रह्माविष्णुमहेश्वरानपि सदा सुव्याकुलान् कुर्वते
व्यर्थं भ्रामयते प्रकाण्डविदुषी हास्यास्पदान् तन्वते ।
द्रव्येशानपि भिक्षुकान् विदधते स्वाच्छन्दचमातन्वते
अज्ञाताऽखिलमर्मणेऽपि विबुधैस्तस्मै नमः कर्मणे ।

—पं० गुलाबचन्द्रः

## 7

धाता यत्पुरतो विभाति विवशो विष्णुर्न यस्मात्परो
नोदास्ते स शिवः कदापि वितते यच्छासने वाऽऽसने ।
यस्याज्ञाः परितो लसन्ति निखिले ब्रह्माण्डभाण्डेऽङ्किता
भ्रातः सर्वमयाय शान्तमनसा तस्मै नमः कर्मणे ।।

—उमाकान्तशुक्लः, मुजफ्फरनगरम्

# लोकतन्त्राधिकारः

दनुजइवमनुष्यो मानवस्यैवभक्षी,
विदधति हृदि दुष्टातंकशंकां जनानाम् ।
वचसि वपुषि येषां भक्तिहीनः प्रचारः
भवति च न हि तेषां लोकतंत्राधिकारः ।।
प्रियगुणहितभावश्छद्महीनः पुमान्यः
सुखयति नरलोकं स्वस्य सेवाश्रमेण
अहरहरनवद्यं कर्मजातन्तु यस्य
वरयति जनभक्त लोकतन्त्राधिकारः ।।

— रतनलाल शर्मा, मनोहरपुरम्

## 2

यस्मिन् व्यक्तेर्महत्वं स्वमत वितराच्छासनं लोकनिघ्नं
यस्मिन् शिक्षा प्रलब्धिः शिशुयुवजरतां पाठशालाप्रसारात् ।
उद्योगानां विकासो रणविषमविधौ शान्तिमार्गोपदेशः ।
सोऽयं लोकोपकारी जगति विजयतां लोकतन्त्राधिकारः ।।

—मोहनलाल पाण्डेयः, अजमेरम्

## 3

अस्माभिभारतीयैर्घृतसुमतिबलैरैक्यभावप्रपन्नै
हित्वा नानानिवादानशिथिलकटिभिः सर्वदाजागरुकैः ।
निष्ठावद्भिः सुदक्षैरविहतमहसा संततं रक्षणीयः
सर्वेषां भारतानां मततिजननो लोकतन्त्राधिकारः ।।

—सत्यनारायणः, अजयमेरुः

## 4

जयतु जनकदम्बस्यात्र संवाधिकारः
जयतु दलितलोकोत्थापने सद्विचारः ।
जयतु यवनहिन्दुर्भ्रातृभावप्रचारः
जयतु जयतु लोके लोकतन्त्राधिकारः ।।
जयतु भरतदेशे संस्कृतस्यप्रचारः
जयतु ललितलोकाराधनायप्रकारः ।
जयतु मनुजलोके सौख्यशान्तेर्विहारः
जयतु जयतु लोके लोकतन्त्राधिकारः ।।
जयतु बुधवराणां वाग्विलासप्रकाशः
जयतु जयपुरेऽस्मिन् सत्कवीनां विकासः ।
जयतु सुरगिराया वर्धने सर्वकारः
जयतु जयतु लोके लोकतन्त्राधिकारः ।।
जयतु जयविलासे काव्यपाठप्रहासः
जयतु सकलविद्यापूजकानां प्रभासः ।
जयतु कविकुलानां कीर्तिकर्मप्रकारः
जयतु जयतु लोके लोकतन्त्राधिकारः ।।
विलसति मतदानं यत्रलब्धप्रभारः
प्रभवति महिलानां सर्वकर्माधिकारः ।
विहरति जनतायाः सेवकः सर्वकारः
जयतु जयतु लोके लोकतंत्राधिकारः ।।

**—डॉ० कृष्णकान्त चतुर्वेदः, वृन्दावनम्**

## 5

रक्ष्यं स्वं स्वं चरित्रं यदि भुवि मनुजैः गौरवं काम्यते चेत्
चेदिच्छा वा स्वकीयं भवतु सुखमयं भारतं वाप्यखण्डम् ।
भोः भोः मनितप्रवृद्धाः वचनमभिनवं श्रूयतां वै तदा मे
हस्ते वै संस्कृतस्य प्रभवतु नितरां लोकतन्त्राधिकारः ।।

**—पं० गुलाबचन्द्रः**

## 6

सर्वः वस्त्रं तथान्नं च सर्वः सौख्यमवाप्नुयात् ।
लोकतन्त्राधिकारोऽयं सर्वः दैन्यं निराशयेत् ।।

**—नटवर जोशी**

## 7

भाषाभेदं जनयति जने प्रान्तपक्षाभिमानं
जात्युद्वेगं क्वचिदयमहो धर्मजन्यं विवादम् ।
राष्ट्रे भक्ति भजति न जनः स्वाधिकारे प्रमत्तः
कोऽयं जातः कलहजनको लोकतन्त्राधिकारः ।।

**—श्रीरामदवे, जोधपुरम्**

## 8

अशनवसनचिन्ता केवलं दृश्यतेऽद्य,
कथमिव परिचर्चाज्ञानविज्ञानयोस्तु ।
विगतकुशल लोको व्याप्तपर्याप्तशोको,
जनमतहृतसारः लोकतन्त्राधिकारः ।।
विभवमदविघूर्णाः द्वेषदुर्नीतिपूर्णाः ।
विगतमतिविवेका शासका वा प्रजा वा ।
दिश नय शुभमार्गं तत्कृते त्वं कवीन्द्र !
किमुत नहि तवायं 'लोकतन्त्राधिकारः' ।।

**—पं० राधाकृष्ण शास्त्री**

# भाविनी शताब्दी

प्रतिगृहं तडिद्योगाद् दूरदर्शनयन्त्रस्य प्रबन्धात् ।
कृत्रिम शिरसोभावाद् भविता यस्यां कार्यपूतिः ।।
प्रसिद्धसौरतेजसा यस्यामन्नपाकादि व्यवस्था
भवितेन्दुलोकवासो धनवतां सा भाविशताब्दी ।।

**—मोहनलाल पाण्डेयः, अजमेरम्**

## 2

उद्जनपरमाणूद्भवहेतिभिराकुलिते विशालतमविश्वे ।
राष्ट्रे भाविशताब्दी भद्रतरा भवतु भूतये भवताम् ।।
अहिंसया खलु भारतैः स्वस्वातन्त्र्यमपूरि ।
भाविशताब्दी वः सदा वितरतु भद्रं भूरि ।।
विकसद्भूरिसमृद्धिमद्भुविभारतं चकास्तु ।
भाविशताब्दी वो बुधाः नव्य भावुकंरातु ।

**—सत्यनारायणः, अजयमेरुः**

## 3

अन्तरिक्षवशकरणी अटलांटिकभूमिवासिनी चेयं
यंत्रयुगीनाक्रान्तिः स्वायाति भाविनी शताब्दी ।।

**—डा० कृष्णकान्त चतुर्वेदः, वृन्दावनम् ।**

## 4

सज्जाः भवन्तु विद्वत्तल्लजाः
विहाय तन्द्रां परित्यज्य निद्राम ।
पुस्तकानि लिखन्तु नव्य विषयेषु
वेदेषु पुराणेषु दर्शनेषु
बोधः शोधश्च कर्तव्यः
संस्कृत समुन्नयनी, आगच्छतीयं भाविनी शताब्दी ।।
देशेषु विदेशेषु यास्यामः,
भारतीयां विद्यां प्रचारयिष्यामः,
पुनरपि जगद्गुरवो भविष्यामः
नेतृत्वञ्चानिवार्यमार्याणाम्
तत्र भवतां भवतां कृते
विनैतन्नास्ति प्रत्याशा सत्कृतेः ।।
संस्कृत समुन्नयनी, आगच्छतीयं भाविनी शताब्दी ।।

**—पं. गुलाबचन्द्रः**

## 5

कीदृशी कीदृशी कीदृशी कीदृशी
भाविनी शताब्दी सखे ! ब्रूयताम् । कीदृशी....
न दैन्यं न दुःखं न विद्या विहीनाः
नरा यत्र सर्वे न रुग्णाः न दीनाः
ज्ञान प्रभा पूर्णदीप्ताः बलिष्ठाः
सखे ! भाविनी स्यात् शताब्दी समेषाम् ।

**—नटवरलाल जोशी**

## 6

आयुधभेषितविश्वविहारा
कम्प्युटर प्रतिपालन-रागा ।
मानव मानस शान्ति विसूचिः
संभविता ननु भाविशताब्दी ।।

**—श्रीराम दवे, जोधपुरम्**

# कस्य नाभ्यर्थनीयाः

रम्यं हर्म्यं प्रमुक्तं सुखमयि सकलं पुत्रदारोद्गतं यैः
बन्धुत्वं यैश्च हीनं स्वजननवसुधागौरवोत्कर्षहेतोः ।
त्यक्ताः प्राणाः प्रिया यैः समरमुविमदा धैर्यमालम्ब्य चित्ते
पूज्यास्ते देशभक्ताः परहितरसिकाः कस्य नाभ्यर्थनीयाः ।।

**—मोहनलाल पाण्डेयः, अजमेरम्**

## 2

अहं कामये मुख्यमन्त्रित्वमेव
स्वराष्ट्रे विभो ! साम्प्रतं स्वप्रयासैः
अमात्यो भवेयं नवाऽहं भवेयं
मनः कामना कस्य नाऽभ्यर्थनीया ।।

**सत्यनारायणः. अजयमेरु**

## 3

छन्दोङ्घ्रिः स्वप्रचारा नवरससरसा रीति शाटी दधाना-
लंकार ग्रीवयुक्ता कटिगुणरसना रासयन्ती रसात्मा ।
लीला संचार चूडाऽक्षरपदवदना माधुरीरूपधारा
व्यङ्ग्यप्रासादखेलाऽपरमिव कमला कस्य नाऽभ्यर्थनीया ।।

**डा. वासुदेवकृष्ण चतुर्वेदः, वृन्दावनम्**

## 4

कामोल्लास प्रसक्ताः प्रचुरगतियुतैः दीपिता भ्रूविलासैः
अत्यन्तोन्मादयुक्तैः रमितरसभरैः स्नापिता मन्दहासैः ।
प्रेमालापप्रसङ्गे कुलकलशयुगदलान्त मध्यप्रदेशाः
कान्ते ते ते विलासाः रतिरसविदुषां कस्य नाऽभ्यर्थनीयाः ।।

**—पं० गुलाबचन्द्रः**

## 5

ये राष्ट्र द्रोहाय कृत प्रयत्नाः
भाषानु प्रान्तैरथवाऽन्य भेदैः ।
ते नाभ्यर्थनीयाः ननु दण्डनीयाः
ते मारणीया गुलिकाभिरायैः ।।

**—नटवर जोशी**

## 6

द्वारे यस्या वसति सततं मारुति र्बद्धपाणिः
नित्यं सिद्धा सरस रसना ह्यन्नपूर्णा च दासी ।
प्राप्यादेशं धनपतिरयं द्रव्यवृष्टिं विधत्ते,
देवैर्वन्द्या सुखद भृतिका कस्य नाभ्यर्थनीया ।।
शिक्षोपाधि प्रचुरविरहेऽप्याप्त वागीश संज्ञा
तन्त्रेनृणां गणयति कृपा प्राप्त पुण्याभिषेका
स्वल्प प्राणाऽप्यति चिरतरं वंश संपद् विधात्री
स्वेष्टा पूर्त्यै सचिव पदवी कस्यनाभ्यर्थनीया ।।

**—श्रीराम दवे, जोधपुरम्**

## 7

पटुकुटिलकटाक्षश्रीजुषां कामिनीना-
मविरलमधुधारामाधुरी वीक्षितानाम् ।
अथ कविपरिपाटीवक्रिमप्रोज्ज्वला वाक्
श्रवणचुलुकपेया कस्य नाभ्यर्थनीया ।।

**—उमाकान्तशुक्लः, मुजफ्फरनगरम्**

## 8

विद्या ज्ञानप्रदाने निखिलमपि धनं निर्धनेभ्यश्च दाने
शौर्यं साफल्यमेति प्रतिपदमनिशं रक्षणे दुर्बलानाम् ।
येषां यत्नात् स्वतन्त्रं पुनरपि भुवने भारतं भात्यखण्डं
ब्रह्माण्डे ते महान्तः सुविमलचरिताः कस्य नाभ्यर्थनीयाः ।।

**—डा० जगन्नारायण पाण्डेयः, जयपुरम्**

# सम्मेलनम्

राजस्थान संस्कृत साहित्य सम्मेलनस्य जयपुराधिवेशनस्य विलक्षणताः—

कमला[1] ह्यत्र समागताऽस्ति विदुषां कर्तुं हृदा स्वागतम्
सत्यप्यत्र नरोत्तमे[2] कथमयं पुरुषेषु चान्योत्तमः ।[3]
याताऽहो पुनरुक्तताऽति गुणतां दृष्ट्वाऽत्र द्वौ शंकरौ[4]
धन्या संस्कृत वाक् तथा जयपुरे तस्याश्च सम्मेलनम् ।।

**—रामकुमारदाधीचः, जयपुरम्**

1. कमला (लक्ष्मीः) विद्वद्द्वेषिणीति रूढिः, परमत्र कमला राजस्थान राजस्वमन्त्री विदुषां स्वागतमाचरति । 2. नरोत्तमः= नरोत्तमलाल जोशी । 3. पुरुषेषु-चान्योत्तमः=डा० पुरुषोत्तमलाल भार्गवः । 4. द्वौ शंकरौ=देवीशंकर (तिवाड़ी) उमेशः (शास्त्री) चेति ।

## 2

राजस्थानगृहाङ्गणे सुचरितं प्रासारि येनाद्भुतम् ।
वर्चस्वेन धरातलं विहितवत्चञ्चत्चमत्कारितम् ।
इत्थंभूतमहे तु संस्कृतिसरित्वाहेरतं सन्मतम् ।
ख्यातिं यातु निरन्तरं सुरगिरां साहित्यसम्मेलनम् ।।
नीतीनां नयने प्रचारप्रसरे शिक्षा सु दीक्षासु च ।
संकल्पा नहि जातु यस्य वितथा अल्पा अनल्पाश्च ये ।
चित्ते वाचि धृतं तदेव हि कृतं नान्यत्प्रियं यस्य वै ।
ईदृक् सत्यहिते रतं सुरगिरां साहित्यसम्मेलनम् ।।

**—रतनलालशर्मा, मनोहरपुरम्**

## 3

यस्मिन् भान्ति समस्तशास्त्रनिपुणा एकत्रिताः पण्डिताः ।
नेतारः कविकर्मपाठरसिकाः शास्त्रार्थतत्त्वप्रियाः ।
भद्रं तज्जयपत्तने विजयतां प्राज्ञैः समायोजितम् ।
राजस्थानविभूषणं सुरवचः साहित्यसम्मेलनम् ।।

**—मोहनलाल पाण्डेयः, अजमेरम्**

## 4

श्रोतृचेतोमहानन्दकृन्निःसर-
त्काव्यसिन्धोः[1] सुधासारयाधारया ।[2]
जीवतादारवीन्दु स्वकीर्त्या चिरं,
संस्कृतस्याऽत्र साहित्यसम्मेलनम् ।।

**—सत्यनारायण शास्त्री, अजयमेरुः**

1. काव्यसिन्धोः काव्यसरितः "सिधुर्वमथुदेशाब्धिवदे ना सरिति स्त्रियाम्" मेदिनी । 2. सुधासारया सुधायाः अमृतस्य आसारः प्रसरणं यस्यां सा तया सुधासारया अथवा सुधायाः सारः यस्यां सा तया सुधासारया "सारो बले स्थिरांशे च" मेदिनी ।

## 5

राजस्थानमहोत्सवेष्वनुपमं विद्वत्कुलानन्ददं
श्रीराजीवमहोदयैरपि मुदा पत्रात् समभ्यर्चितम् ।
यंत्रे टी० वि० चतुर्दिनाङ्क मइके रात्रौ च यद्घोषितम्
विद्वत्काव्यकलाधरैश्च खचितं तद्विज्ञसम्मेलनम् ।।

—डा० वासुदेवकृष्णचतुर्वेदः, वृन्दावनम्

## 6

नानाशास्त्रविचारकार्यचतुरं विज्ञानसंशोभितम्
श्रीमद्दिव्यसरस्वतीविलसितं संयोजितं सूरिभिः ।
सज्जाकौशलशिल्पकीलितकलं विद्युत्त्विषां मेलनम्,
भूयात् भूतिकरं च संस्कृतविदां साहित्यसम्मेलनम् ।।

—पं० गुलाबचन्द्रः, जयपुरम्

## 7

वेद-साहित्य-शब्दागमादेर्विदां
चिन्तनं शास्त्रवाचां समुद्वेलनम् ।
होमधूमैः सहालोकितं रात्रिभि-
र्देववाण्याः कवीनां च सम्मेलनम् ।।
नव्यशिक्षासरण्यां कथं संस्कृतं
स्थानमाप्नोत्वितीहाभृतांखेलनम् ।
दृष्टमस्मिन् सदस्युत्तमं वासरै-
र्देववाणीविदामद्यसम्मेलनम् ।।

—कलानाथशास्त्री, जयपुरम्

## 8

संमेलनं स्यात् कमला-बलानां
गीर्वाणवाणी-विदुषां सतां च ।
न राजलीला-कृत-वाङ्निरोधः
सा माधुरी राष्ट्रहिताय भूयात् ।।

—श्री रामगोपाल शास्त्री, जयपुरम्

## 9

संस्कृतिः शाश्वती संस्कृतं संश्रिता
लालितुं पालितुं तां क्षमः केवलम् ।।
ज्ञानविज्ञानविद्योतितान्तः परं
ज्योतिमत्संस्कृतं दिव्य-सम्मेलनम् ।।

—गिरिजासप्रादगिरीशः जयपुरम्

## 10

दृष्टो विग्रहवारणाय विहिते सम्मेलने विग्रहो
दृष्टं चामृतसंगमेऽपि गरलं व्याजेनसंयोजिते ।
लब्धं व्याजतले सदैवतिमिरं ज्योत्स्नाशयालम्बिते,
व्याजव्याधिविमुक्तमस्तु विदुषामेतद्धि सम्मेलनम् ।।

—श्रीरामदवे, जोधपुरम्

## 11

सौभाग्याज्जगदीशशङ्करकलानार्थिषिगंगाधर—
श्रीनारायणविष्णुकान्तनलिनिगोपालमुख्यैरिदम् ।
रामानन्दशिवेन्द्ररुद्रगिरिजाराजेन्द्रकृष्णादिभिः—
संमान्यैः कविभिर्विभाति नितरां साहित्यसम्मेलनम् ।।
मुक्तामण्डलमण्डनेन महितं श्रीमण्डनेनावृतं
शाहोद्यानभुवि श्रुतिस्मृतिजुषां मन्त्रैरलं पावितम् ।
श्रीहीराहरिदेवजोशिकमलामुख्यैर्नुतं मन्त्रिभिः
सिक्तं काव्यरसेन चात्र विदुषामाभाति सम्मेलनम् ।।

—डा० जगन्नारायणपाण्डेयः जयपुरम्

## मन्त्रिणः

अमराणां हि या वाणी मर्त्यवाणी भवेत्पुनः ।
तदर्थं हार्दिकीं चेष्टां कुर्वन्तु भुवि मन्त्रिणः ।।

**—रामकुमारादधीचः, जयपुरम्**

## 2

दीनानां प्रहितैषिणः सुमनसो धीराः महासङ्कटे
राष्ट्रोत्थानपरायणाः नयविदो गम्भीरभावोज्ज्वलाः ।
धन्याः भारतभूविकासकुशलाः वीराः महात्यागिनः
मान्याः श्रीलजवाहरप्रभृतयो नम्याः महामन्त्रिणः ।।

**— मोहनलालपाण्डेयः, अजयमेरुः**

## 3

कार्यालये कर्मकरा, अनादेशकरा यदा ।
देशे तदा कथं शं स्यात् किं करिष्यन्ति मन्त्रिणः ।।

**—सत्यनारायणशास्त्री, अजयमेरुः**

दीयन्तां मतदानमत्र विबुधाः, पादार्चने लग्नकान्
लोकानामुपकारकांश्च कुशलान् सेवापरान् बान्धवान्
नित्यं मण्डलसेवकानहरहः प्रत्यक्षकल्पद्रुमान्
इत्येवं जनतासुसेवनपरा राजन्त्यहो मन्त्रिणः ।।

**— डा० वासुदेवकृष्णचतुर्वेदः, वृन्दावनम्**

## 4

अम्रीकाऽतुलचाटुकर्मनिरतः पाकः करोत्यप्रियम्,
सीमान्ते कुरुते परं प्रतिदिनं सेनासु संघर्षणम् ।
शिक्खान् शिक्षयते सदा प्रकुरुतेऽप्यातङ्कितं भारतम्
कार्याकार्यविधौ विचारकुशलाः पश्यन्त्विमान् मन्त्रिणः ।।

**—पं० गुलाबचन्द्र, 'पाटलेन्दु'**

## 5

सम्मानं परितो धृताञ्जलिपुरैः प्राप्तं धनाढ्यैर्गतम्,
मृद्वीयं सुखदा प्रिया कुरसिका स्वप्ने स्थिता साम्प्रतम् ।
आत्मीयैश्चिरमत्सरैः हृत्तपर्णैः मौनं मतैर्वंचिताः,
खिद्यन्ते नु पराजिताः निजजनैर्निर्वाचिने मंत्रिणः ।।
रम्यास्ते पवनानुकूलितगृहाः सन्मण्डनैर्मंडिता
आतिथ्यं सरसं नवोदितमरुद्वेगं प्रियं वाहनम् ।
यात्रा वायुरथेन कार्यमिषतो देशेविदेशे च सा,
यातं तत्सकलं पराजयवतामित्याकुलाः मन्त्रिणः ।।
पूर्वं या महिषीवदास गृहिणी जाता पुनर्मूषिका
ताते शासति पुत्रकादिविद्दशो लिह्यन्ति रथ्यारजः ।
सामन्तीं प्रभुतां गतोऽयमधुना श्यालः शृगालायते,
पीडचन्ते हि पराजिताः स्मृतिसुखैः प्राग्वैभवै र्मन्त्रिणः ।।
पणे शूराः कणे दीनाः कम्बुपिंडाः सिताम्बरा
पूजिताः न प्रयच्छन्ति नैते शंखास्तु मन्त्रिणः ।।
कासारतरमासीनाः श्वेतकंचुकधारिणः
मीनध्यानपरा ये च बका नैते तु मन्त्रिणः ।।
स्थिता सिंहासने दृप्ता, मत्तमातंगमर्दकाः
हता निर्वाचने दीना, जम्बूका इव मन्त्रिणः ।।
स्मरन्तो दिवसान् या तान्, मानमुद्रासमन्वितान्,
केदारकर्दमक्लिन्ना, परास्ता पूर्वमन्त्रिणः ।।

**- श्रीरामदवे, जोधपुरम्**

## गीर्वाणवाणी

या भारतेऽस्मिन् विविधस्वरूपा, गिरां प्रसिद्धा खलु जन्मदात्री ।
धात्रीव ताः सम्परिपोषयन्ती, गीर्वाणवाणी समुपासनीया ।।
एकात्मकं राष्ट्रमिदं पुराणं, भाषाविभेदेन विभिन्नकल्पम् ।
ययैकता तस्य समाहृताऽसौ, गीर्वाणवाणी समुपासनीया ।।
प्रदेशभाषापरिपोषणार्थं, सत्संस्कृतेः सम्परिरक्षणार्थम् ।
राष्ट्रप्रतिष्ठाप्रविवर्धनार्थं, गीर्वाणवाणी समुपासनीया ।।

**—श्रीधरभास्करवर्णेकर**

## 2

साहित्यसौहित्यतरङ्गिणीव, सद्भावरम्या वरवर्णिनीव ।
विद्वत्सुमुक्ताऽऽभरणाञ्चितेव गीर्वाणवाणी सततं प्रणम्या ।।
मनोज्ञभावा सुभगस्वराञ्चिता सुवर्णविन्यासशुभैः पदैरिता ।
सचेतसाञ्चित्तगता रसान्विता गीर्वाणवाणी रमणीव रम्या ।।
कारुण्यवात्सल्यमयेऽतिरम्ये सुकाश्यपान्तः करणप्रयागे ।
लोकोपदेशामृतसेकदिव्या शकुन्तला यत्र पवित्रकीर्तिः ।।
प्रासूतपुत्रं परमं पवित्रं सिंहातिशक्तिं भरतेतिसंज्ञम् ।
ख्यातं रतं भाः सु च भारतन्तत् गीर्वाणवाणी जयतात् सदैव ।।

सीतारामयो विभातिमुकुरो दाम्पत्यकान्तियुतः
वात्सल्याम्बुधिमेष यत्र भरतश्चन्द्रोऽपि सम्पूरयन् ।
सद्भक्त्याद्दढमूलितो हनुमता दास्यध्वजो रोपितः ।
मैत्रीदीपशिखा शुभाप्रभुपदस्नेहा ससुग्रीवका ।।
श्रीमत्कृष्णमुखारविन्दभणितिर्गीता महाभारते ।
कर्मण्येव निजाधिकार इति भोः शिक्षां ददाना सदा ।
इत्थं विश्वजनीनभावभरिता पाश्चात्त्यहृद्‌बर्हिणः
नित्यं नर्तयतीह या विजयताम् गीर्वाणवाणी सदा ।।
यातो दीपशिखां यदीयसुषमापूरः शुभस्नेहवान्
यद्भावा हि सदर्थगौरवमये तल्पे सुखं शेरते ।
यत्काञ्चीगुण शब्दरत्ननिचितो घण्टां शुभांवादयेत्
सेयं देवगृहस्थलीव जयताद् गीर्वाणवाणी सदा ।

**—लक्ष्मीनारायणआसोपा, जोधपुर**

## 3

रक्षाऽस्मद्गौरवस्य गुणगणकलिनी भासिनी भारतस्य,
सन्दर्भः सत्कृतीनां नवमधुफलिनी पालिनी संस्कृतीनाम् ।
नानाग्रन्थोच्चगुम्फैः कविवररचितैः शालिनी भूतलेऽस्मिन्,
शीघ्रं वै राष्ट्रवाणी कवि भुवि सुतरामस्तु गीर्वाणवाणी ।।

**—पं० गुलाबचन्द्रः, जयपुरम्**

## 4

नरगिरां जननी कल्याणी । जयति जय गीर्वाणवाणी ।
सेविता दिव्यसुफलदात्री । जीवने सुपथो निर्मात्री ।
यया सृष्टा संस्कृतिसरणिः । ज्ञानवह्नेस्तु कृते अरणिः ।
निजनिजचेतसि चाद्य हे, विबुधजनाः ! कलयन्तु ।
सर्वैः सेव्यां भारते संस्कृतमेव विदन्तु ।
अविद्याहन्त्री शर्वाणी । जयति जय **गीर्वाणवाणी** ।।

**—रामकुमारदाधीचः, जयपुरम्**

## 5

यस्यां वेदोपदेशः सकलहितकरो याति बोधप्रदीपः,
यस्याञ्चारित्र्यशिक्षा बहुविनययुता सर्वराष्ट्रप्रधाना ।
ऐक्यं पुंसामजस्रं प्रमुदति सकलान् देशरक्षां विधातुं,
भाषाणां यास्ति माता जगति विजयतां सा हि गीर्वाणवाणी

**—मोहनलाल पाण्डेयः, अजमेरम्**

## 6

अनुपममतिहृद्यं, कालिदासस्य काव्यम्,
ललितपदसुगुच्छं, दण्डिनो गद्यकाव्यम् ।
अति विलसति यस्यां, भारवेरर्थवाणी,
जयतु जयतु सैषा, वन्द्यगीर्वाणवाणी ।। 1 ।।
ऋषिमुनिजनसिद्धाः, सुस्तना यत्र वेदाः,
कलिमलतरिभूतं, यत्पयोज्ञानराशिः ।
नियमितगतिबद्धा, यन्मुखं शब्दविद्या,
जयतु जयतु माता धेनु गीर्वाणवाणी ।। 2 ।।
निखिलविदितशास्त्रं साक्षिभूतं प्रमाणम्,
वितरति जनसौख्यं ह्यायुषो ज्योतिषश्च ।
प्रचरतु समलोके पुण्यपीयूषवाणी,
जयतु जयतु देशे वन्द्यगीर्वाणवाणी ।। 3 ।।
चरकमुनिवरोक्तं शास्त्रमत्र प्रमाणम्
जगति यशसि चन्द्रौ, सुश्रुतं वाग्भटञ्च ।
नरपतिनयशिक्षा, यत्र चाणक्यवाणी,
जयतु जयतु सैषा वन्द्यगीर्वाणवाणी ।। 4 ।।
निखिलजनकुटुम्बं मन्त्रमुद्घोषयन्ती,
अपि च सह भुनक्तूद्घोषमुद्घोषयन्ती ।
सपदि तिमिरहन्त्री व्यासपीयूषवाणी,
जयतु जयतु राष्ट्रे पुण्यगीर्वाणवाणी ।। 5 ।।
कपिलमुनिकणादौ, गौतमश्चार्यभट्टः,
विदितवरदपुत्रः पाणिनिश्शब्दशास्त्री ।
सुविदितमति यस्याः नाम विश्वश्रुतानाम्
जयतु जयतु सैषा पुण्यगीर्वाणवाणी ।। 6 ।।

**—रामस्वरूपदोतोलिया, बिलौंची**

# 7

समुच्छ्रयन्ती गगने पताकां ज्ञानस्य धर्म्याभ्युदयप्रदात्रीम् ।
निःस्यन्दयित्री कवितामृतस्य गीर्वाणवाणी जयताज्जगत्याम् ।।

—सत्यनारायणः, अजयमेरुः

# 8

कालुष्यं विदधन्ती जीवत्यवमानितां ग्लानां वाणी ।
लोकैर्वन्द्या जयतात् विश्वे श्रीगीर्वाणवाणी ।।

—डा० वासुदेवकृष्ण चतुर्वेदः, वृन्दावनम्

मन्दाः वेदाः विबुधवदने शास्त्रचर्चापि दीना.
नैवाधीते जडमतिजनः शब्दशास्त्रं विशालम् ।
लब्धोपाधिश्चरति विबुधो वृत्तये पत्रपाविर्
भृत्याभिक्षु रुदति विबुधं वीक्ष्य गीर्वाणवाणी ।।

—श्रीरामदवे, जोधपुरम्

# 9

माधुर्यं व्यञ्जयन्ती सपदि निखिलमालिन्यमुन्मूलयन्ती,
तृप्तिं सम्पादयन्ती तृषितमतिमतां ज्ञानमुद्भासयन्ती ।
तत्वं वाण्याः परायाः स्फुटललितपदैः सन्दिशन्ती निकामं,
श्रेयो मार्गं दिशन्ती जयति भुवि चिराद् दिव्यगीर्वाणवाणी ।।

—डा० जगन्नारायण पाण्डेयः, जयपुरम्

# 10

वर्गाणां वै समधिगमने हेतुभूता चतुर्णाम् ।
काव्यश्रेष्ठैः सहृदयमनोहारिणी या मनोज्ञैः ।।
लब्ध्वा यस्यामपि सुवसति शारदा सारदाऽभूत् ।
धन्यैवैका जयति भुवने सा हि 'गीर्वाणवाणी' ।।
बाणोच्छिष्टं जगदिदमिति द्योतयन्ती जनोक्तिम् ।
हृद्यैर्गद्यैर्गुणगणयुतैः भावुकावर्जिका या ।
बाणायन्ते रुचिररचनां चातुरीबद्धशब्दाः .
धन्या श्लाघ्या कविकुलवरैः साहि 'गीर्वाणवाणी ।।

—पं० राधाकृष्ण शास्त्री, जयपुरम्

बोधैः प्रपूर्णा सरसा मनोज्ञा,
शुद्धा समृद्धा च परिष्कृतेयम् ।
विशुद्धविज्ञाननिधानयुक्ता,
गीवार्णवाणी मधुरा सुधन्या ।। 1 ।।

प्राञ्जल्यपूर्णा परिपक्वबोधा,
शोधैस्समापूरितशब्ददेहा ।
बुधैस्स्तुतेयं खलु जाह्नवीव,
गीर्वाणवाणी मधुरा सुधन्या ।। 2 ।।

वैचित्र्यभावातिपवित्रभाषा,
भूषातिहर्षात्मकतां बिभर्ति ।
वेदैः पुराणैः परितः प्रपन्ना,
गीर्वाणवाणी मधुरा सुधन्या ।। 3 ।।

वाल्मीकिरामायणरत्नशीला,
लालित्यलीलालसिता सदैव ।
श्रीरामवार्तापरिभूषितेयम्,
गीर्वाणवाणी मधुरा सुधन्या ।। 4 ।।

व्यासस्य हासेन विभाति शुभ्रा,
लालित्यपूर्णा कविदण्डिना च ।
श्रीकालिदासोपमयातिरम्या,
गीर्वाणवाणी मधुरा सुधन्या ।। 5 ।।

गम्भीरशब्दार्थविधायकोऽभूत्,
श्रीभारविः काव्यकलाकलानिधिः ।
तद्भान्विता सम्प्रति भाति भारती,
गीर्वाणवाणी मधुरा सुधन्या ।। 6 ।।

वेदार्थपाथोनिधिमन्थनोत्थं,
गीतामृतं लोकहितङ्करं तत् ।
गूढार्थशक्त्या गरिमाम्बुराशिः,
गीर्वाणवाणी मधुरा सुधन्या ।। 7 ।।

गद्यात्मके काव्यकलाप्रकारे,
बाणस्य वाणी प्रथिताऽत्रलोके ।
कादम्बरी भावविभावसिक्ता,
गीर्वाणवाणी मधुरा सुधन्या ।। 8 ।।

सदैव चैषा परिशीलनीया,
भूत्यात्मशक्त्या परिसेवनीया ।
धन्या सुमान्यामृतवर्षिणीयम्,
गीर्वाणवाणी मधुरा सुधन्या ।। 9 ।।

– डॉ० नन्दकिशोरगौतमः, जोधपुरम्

# राष्ट्रहिताय भूयात्

जाताः वयं भारतभूमिभागे
नानासरिन्निर्भरनिर्मलाम्बुः ।
पञ्चाम्बुदेशे प्रवहन्ति नद्यः,
तासां जलं राष्ट्रहिताय भूयात् ।।
विन्ध्याचलो देवगिरिर्सुमेरुः,
दिव्यौषधिर्युक्तनगाधिराजः ।
रत्नान्यमूल्यानि च धारयन्ति,
द्रव्यं हि तद्राष्ट्रहिताय भूयात् ।।
विद्वज्जनाः वेदविशारदाश्च,
साहित्यसंगीतकलानिधानाः ।
यच्छन्तु सर्वे स्वकलां जनेभ्यः,
ज्ञानञ्च तद्राष्ट्रहिताय भूयात् ।।
निष्पक्षधर्मे खलु भारतेऽस्मिन्,
सर्वे जनाः भारतभूमिपुत्राः ।
न कोऽपि सिक्खो न च मुस्लिमोऽस्ति,
एषां बलं राष्ट्रहिताय भूयात् ।।
भाषासु मुख्या मधुरा च वाणी,
गीर्वाणगीः लौकिकवैदिकी च ।
साहित्यसर्वोत्तमसंयुता या
भाषा हि सा राष्ट्रहिताय भूयात् ।।

**—सत्यनारायणशास्त्री, सीकरम्**

## 2

विद्योतमाना श्रुतिमन्त्रदीप्त्या
विराजमानाऽखिलशास्त्रशक्त्या ।
गीर्वाणवाणी समुपास्यमाना
निश्चप्रचं राष्ट्रहिताय भूयात् ।।
स्वधर्मकर्मैकपरायणानां
विद्याकलोपासनसुव्रतानाम् ।
स्वराष्ट्रसेवार्पितजीवनानाँ
सम्मेलनं राष्ट्रहिताय भूयात् ।।

**—श्रीधरभास्करवर्णेकरः**

## 3

संस्कृतज्ञाः सुधियोऽत्रकर्मणः समुत्सहन्ते जनसेवनाय ।
आयोजितं जयपुरपुण्यभूमौ सम्मेलनं राष्ट्रहिताय भूयात् ।।

**—राजकुमारदाधीचः, जयपुरम्**

## 4

उद्योगवृद्धिः समता समाना, निष्पक्षमैत्री परराष्ट्रबद्धा ।
शान्ति प्रशिष्टिः समुदारभावः, सर्वञ्च नो राष्ट्रहितायभूयात् ।।

**—मोहनलालपाण्डेयः, अजमेरम्**

## 5

विहाय सर्वान्मितभेदवादां-
स्तथा प्रयासोऽखिलभारतीयैः ।
सदाविधेयोऽस्ति सुरक्षितायै-
ऽप्यखण्डता राष्ट्रहिताय भूयात् ।।
सम्यङ् निरीक्ष्यैव नियोजिताया
न्याय्याऽपरा श्लाघ्यतमाऽतिनव्या ।
प्रशासकाः ! सम्प्रति भारतेऽस्मिन्
सा योजना राष्ट्रहिताय भूयात् ।।

**—सत्यनारायणः, अजयमेरुः**

## 6

ध्यानं भवेद्देशपरायणानां
ज्ञानं भवेत् भारतसंस्कृतेश्च ।
दानं भवेत् दीनजनेषु नूनं
मानं सदा राष्ट्रहिताय भूयात् ।।

**—डा० वासुदेवकृष्णचतुर्वेदः, वृन्दावनम्**

## 7

समाप्तसर्वं प्रतिपक्षनक्रं सुसंस्कृतं सद्विदुषामवत्रम् ।
राजीवगान्धीनृपनीतिचक्रं प्रवर्तितं राष्ट्रहिताय भूयात् ।।

**—पं० गुलाबचन्द्रः, जयपुरम्**

## 8

मतिर्नवोन्मेषवती बुधानां
कृतिः क्रियाकौशलतत्पराणाम् ।
भूतिर्जनानां हितसाधकानां
गतिः सतां राष्ट्रहिताय भूयात् ।।

**—श्रीरामदवे, जोधपुरम्**

## 9

मतिर्विदां कार्यगतिश्च यूनां
वैज्ञानिकानां प्रगतिर्नवीना ।
कवित्वशक्तिश्च कवीश्वराणां
निरन्तरं राष्ट्रहिताय भूयात् ।।

**—डा० जगन्नारायणपाण्डेयः, जयपुरम्**

## 10

साहित्यसौरभ्यसमाहृतानां
सद्भावसौन्दर्यसुभावितानाम् ।
वैदुष्यप्रागल्भ्यप्रभान्वितानां–
सम्मेलनं राष्ट्रहिताय भूयात् ।।

**—नटवरशास्त्री, लक्ष्मणगढम्**

## 11

मनोः प्रसूतेरदितेः सुताना–
माचारशास्त्रे च कृतश्रमाणाम् ।
गीर्वाणवाणीसमुपासकानां
सम्मेलनं राष्ट्रहिताय भूयात् ।।

**—उमाकान्तशुक्लः मुजफ्फरनगरम्**

# राजताम्

गीर्वाणवाणी राजताम् ।
नादविन्दुसमुद्भवेयं परावागनपायिनी ।
सूक्ष्मरूपधरा नित्या सर्वपालनहारिणी ।
अनादिनिधना शक्तिः कारणं जगतः स्थितौ ।
ऋचां यजुषां साम्नाञ्च मूलभूता स्वामिनी ।।
गीर्वाणवाणी राजताम् ।
प्रणवः सर्ववेदेषु सारभूताधीश्वरी ।
सर्वमंगलसंयुक्ता श्वेतपद्मविहारिणी ।।
कमलकोमलकान्तवर्णा ज्ञानपादपरोहिणी ।
माननीया भक्तविदुषां अक्षवीणाधारिणी ।
गीर्वाणवाणी राजताम् ।
भाष्यमाणा या हि भाषा सर्वतः परिवर्तते ।
देववाणीमूलरूपा सा तथैव विराजते ।
कालिदासभासबाणहर्ष काव्यमृणालिनी ।
संस्कृतं हि विराजतेऽद्य भारते भुवि भारती ।
गीर्वाणवाणी राजताम् ।
मानवश्च मनोरपत्यं तेऽपि भारतभूमिजाताः ।
सत्यशीलाहि सताया: शिक्षकाः स्युरिति कामये ।
संस्कृते संस्कारकर्त्री भारते भुव्येकदेशे ।
विविधजातिसुधर्मयुक्ता श्रृङ्खलैकविधायिनी ।
गीर्वाणवाणी राजताम् ।

**—कन्हैयालाल शर्मा, जयपुरम्**

## 2

सुखं सुशान्तिः समतादयो गुणाः
स्थिताश्च यस्यां जगतां हि संस्कृतिः
शिष्टाः जनाः सन्ति यया तु भाषया
गिराऽमराणां भुवि सा विराजताम् ।।
अहिंसकस्य मे मनस्यचौर्यमस्तु सन्ततम् ।
कलङ्कपङ्कशून्यता विभातु कायिकी सदा ।।
अरत्नरत्नराशिषूपयातु साम्यभावना ।
जितेन्द्रियत्वमस्तु वा ऋतन्तु वाचि राजताम् ।।
जन्माङ्गे यस्य लग्नेशो लाभकेन्द्रत्रिकोणगः ।
शुभेक्षितोऽथ संयुक्तः सोऽधिगच्छति राजताम् ।।
भाग्याधिपस्तु लाभेस्याल्लाभेशो भाग्यसंस्थितः ।
कर्मस्थो यस्य छायाजो नूनं प्राप्नोति राजताम् ।।

**—रतनलालशर्मा, मनोहरपुरम्**

## 5

राष्ट्राणां समितौ प्रशान्तिपदवीप्रस्थापनाघोषकः
निर्भीको युवकः सुनीतिनिपुणो देशे विदेशे महान् ।
देशोद्धारपरायणस्वजननीसंयोजनापोषकः
राजीवः सचिवाग्रगण्ययुवको मन्त्री चिरं राजताम् ।।

—मोहनलालपाण्डेयः, अजयमेरुः

## 6

नानादिग्भ्य उपागतैर्बुधवरैः साहित्यसेवापरै—
र्नानाकाव्यविधासु गीतिषु चिकीर्षद्वस्तुकाव्यं नवम् ।
मञ्चाद्रौ निजकाव्यपाठनिरतैः काव्यामृतं संस्रवद्
वर्षद्भिर्जलदायमानकविभिः सम्मेलनं राजताम् ।।

सत्यनारायणःशास्त्री, अजयमेरुः

## 7

संस्कृतं राजतां संस्कृतिः राजतां
संस्कृता राजतां संस्कृता राजताम् ।
भारतं राजतां भारती राजतां
भारतो राजतां भारता राजताम् ।।

—डॉ० सुधाकराचार्यः मेरठ

## 8

शिरःसु सर्वभाषाणां भावाभिव्यक्तिसक्षमम् ।
ज्ञानविज्ञानसम्पन्नं संस्कृतं वै विराजताम् ।
नवाकाशे सुराष्ट्राणां योजनोदिततारके
कलालापकलायुक्तः संस्कृतेन्दुश्च राजतास् ।

—पं० गुलाबचन्द्रः, जयपुरम्

## 9

भावुकैर्भाविता मञ्जुला माधुरी
भावगांभीर्यगाढा सुरम्या रसै
श्चिन्तकै श्चिन्तिता वन्दिता साधकैः
पूजिता सूरिभिः भारती राजताम् ।।
कृष्णरामादिभिः कालिदासादिभिः
सेविता ह्यर्चिता भूषिता वर्धिता
संस्कृतिः संस्कृता भारती भासताम्
शोभतां वर्द्धतामेधतां राजतां ।।

—नटवरजोशी लक्ष्मणगढ़

## 10

वेदविद्याविकासाय सच्चेष्टतां
शास्त्रचर्चाप्रसंगेषु संधीयताम् ।
भातृभावं च सर्वत्र संघुष्यतां
संस्कृतं सर्वलोकेषु संराजताम् ।।

भारतीसंस्कृतेर्घोषमाचर्यतां
सत्कवीनां गिरोनित्यमासेव्यताम् ।
राष्ट्रभक्तेः स्वरा नित्यमाधार्यतां
संस्कृतं सर्वलोकेषु संराजताम् ।
वैरभावंपरित्यज्य आगम्यतां
भारतीया वयं नैव विस्मार्यताम्
भेदभावात्मिकावृत्तिरावर्ज्यतां
संस्कृतं सर्वलोकेषु संराजताम् ।।

विश्ववन्द्या गिरो नित्यमासेव्यताम्
राजनीतावपि ध्यानमाचर्यताम् ।
सद्गुरूणां पदाजेषु धीर्भ्राजताम्
संस्कृतं सर्वलोकेषु संराजताम् ।।

देशसेवापरावृत्तिमाधार्यतां
मानवानां विकासाय संयुज्यताम् ।
देशभक्तांश्च चित्रे सदा स्मर्यतां
संस्कृतं सर्वकालेऽपि संराजताम् ।।

धर्मराजो दधीचिश्च रामः शिविः
रन्तिदेवो हरिश्चन्द्रकर्णादयः ।।
वृत्तमेषां स्वदेशे सदा भ्राजतां
संस्कृतं सर्वकालेऽपि संराजताम् ।।

श्रीवशिष्ठो मुनिर्याज्ञवल्क्यो भृगुः
देवलो धौम्यदक्षो मुनिर्जैमिनिः ।
व्यासदेवादिदानं च सम्पूज्यतां
संस्कृतं सर्वकालेऽपि संराजताम् ।।

उत्तरो मध्यदेशोऽथकर्णाटकः
बंगदेशो विहारोऽथ पञ्चायकम् ।
कैरलस्तामिलश्चान्ध्रराजद्वयः
केन्द्रनीतिः सदैतेषु संराजताम् ।।

बापुगांधीमहात्मा हृदि चिन्त्यताम्
नेहरुर्जवाहरश्चाभिसम्पूज्यताम् ।
इन्दिरा स्वर्गतापि सदा स्मर्यताम्,
नीतिरेषा सदा चात्र संराजताम् ।।

—डॉ० कृष्णकान्तचतुर्वेदः, वृन्दावनम्

## 11

अविद्याब्धिनिमग्नानां तारणे हेतुतां गताः ।
नौकेव संस्कृताभाषा लोकेऽस्मिन् विराजताम् ।।

**—रामकुमारदाधीचः, जयपुरम्**

## 12

राजतां राजतां संस्कृतं राजताम्
देवाङ्गनानां दिविस्थितानां लीलास्थलं राजताम् ।।
यस्य माधुरी पेया कमलासनमागेया,
कविवरैश्च काव्यमग्नैः लोकतन्त्राधिकारलग्नैः
रक्ष्या सदा वर्तताम्, राजतां राजताम् ।।
यद्गीर्वाणवाणी यत्रैव वेदवाणी
यस्य विलासः कालिदासः यस्य च हासः सुकविभासः
तस्य रजो वर्धताम् राजतां राजताम् ।।
राष्ट्रहिताय भूयात्, विश्वहिताय भूयात्
राष्ट्रभाषा विश्वभाषा संस्कृतमेतत्लोकभाषा
भूयो भुवि भूयताम् - राजताम् ।।
वाल्मीकिव्यासमाघकालिदासैः
भारविभट्टिबाणभट्टकविविभूतिर्भवभूतिभासैः
तस्य यशो नीयताम्, राजतां राजताम् ।।

**—डॉ० सुभाषवेदालङ्कारः, जयपुरम्**

## 13

यस्याः गौरवमयी गाथा भासतेऽद्यापि भारते ।
राजस्थानधरित्रीयं सर्वदेवात्र "राजताम्" ।।1।।
बालुकानिचयैः शुष्कां सिञ्चन्ती वारिणा धराम् ।
इन्दिराख्या महाकुल्या राजस्थानेऽत्र राजताम् ।।2।।
महनीययशाः श्रीमान् नृपनीत्यां विचक्षणः ।
मुख्यमन्त्री महाभागो राजस्थानस्य"राजताम्" ।।3।।
हीरकः द्युतिमान् धीरो मतिमान्नयकोविदः ।
देवपुराभिधः श्रीमान् हीरालालोऽत्र 'राजताम्' ।।4।।
आर्यावर्तस्यमेधावीप्रधानमन्त्रिणःपदम् ।
अलङ्कुर्वन् समुत्साही राजीवो भुवि 'राजताम्' ।।5।।
हिमगिरिः प्रहरीव यदुत्तरे, यमजलेशदिशोः नदतोऽम्बुधी ।
मघवतो दिशि कामधराऽऽमलाजगति भारतमय हि राजताम् ।6।

**—शंकरलालशास्त्री, फतेहपुरम्**

1. कामरूप आसाम । 2. दक्षिणपश्चिमदिशोः ।

## 14

प्रवर्धतां देवगवी महीतले
प्रमोदतां विज्ञकुलं निरन्तरम् ।
मनोरमाऽस्मासु रमा सरस्वती
निसर्गकल्याणवती च 'राजताम्' ।।

**—डा० जगन्नारायणपाण्डेयः, जयपुरम्**

## 15

लालितोऽहं यया निर्भरं पालितो
यत्पयोभिश्च तृप्ता मदीया तनुः ।
आहिमाद्रेरियं सागरान्तं तता
शाश्वती मे धरा राजतां 'राजताम्' ।।1।।
या न सृष्टा मया या न सृष्टा त्वया
केवलं जीवितुं चाऽत्र सृष्टाः वयम् ।।
खण्डयिष्यन्ति ये वा धरां मामकीं
मत्कृपाणस्तदुत्पाटने "राजताम्" ।।2।।

**—गिरिजाप्रसाद'गिरीशः' जयपुरम्**

## 16

यस्याः स्निग्धरसालसालबकुलाशोकालिमुख्यानुगै–
निर्भृत्पुण्यपरागकीर्तिनिवहा सम्पूरिताशामुखा ।
रक्तायोगिपलाशिकिंशुकसुमैः (पटैः) जाते वसन्तोत्सवे ।
रोलम्बा ब्रुवते सुवन्दिन इव राजस्थलो 'राजताम्'।।

**—पं० राधाकृष्ण शास्त्री, जयपुरम्**

## अग्रेसरः केसरी

कुशलः कर्मणि कर्मयोगनिरतः साफल्यभाग् जायते
श्रीरायाति स्वयं गृहे सुकृतिनस्त्यक्त्वाऽलसं प्राणिनम् ।
उद्योगं कुरु मित्र विघ्नरहितं भविता ध्रुवं ते पथः
मार्गं तं हरिणास्त्यजन्ति यस्मिन्नग्रेसरः केसरी ।।

**–रामकुमारदाधीचः, जयपुरम्**

## 2

अणुर्महत्कृश:स्थूलं वस्तुजातं तु भूतले
अस्ति मूल्यं हि सर्वेषाममूल्य: कविकेसरी ।।
दैत्यानां वृषपर्व वै दिविषदां विष्णु र्यथा रक्षक:
वापी कूपतडागमेघसरितां सिन्धुर्जलानां पति: ।।
तारासंघमयंकविद्युदनले सूर्यो यथा भासक: ।
तद्बद्व्यस्तसमस्तजन्तुनिवहेष्वग्रेसर: केसरी ।।

**—रतनलालशर्मा, मनोहरपुरम्**

## 3

न्यायारण्यचर: कुतर्ककरिण: कुम्भस्थलोत्पाटक:
आतङ्काजिनयोनिनाशनिपुण: प्रद्विट्पशुत्रासक: ।
पञ्जाबासमदेशदुर्गमपथं शान्त्यङ्घ्रिभि: शोधयन्
राजीव: शुभभारते नयवतामग्रेसर: केसरी ।।

**—मोहनलालपाण्डेय:, अजमेरम्**

## 4

अन्ताराष्ट्रियराष्ट्रियारिनिवहेनाऽऽकान्त एषोऽधुना
यायादभ्युदयं कथं कथयतां ? सद्योऽद्य देशो हि न: ।
तावद्राष्ट्रहितं भविष्यति दृढं स्वप्नेऽपि नो कर्हिचित् ।।
यावद् बद्धकटिर्न कश्चन भवेदग्रेसर: केसरी
सुसम्यक् स्वराष्ट्रस्यवृद्ध्यै समृद्ध्यै,
प्रगत्यै विकासाय संरक्षणाय ।
मयैकोऽधुना वीरराजीव एव,
नरोऽग्रेसर: केसरीवाऽत्रदृष्ट: ।।

**—सत्यनारायण: अजयमेरु:**

## 5

लोके सन्ति सहस्रशोऽतिकुशला: सौख्यान्विता: मानवा:
दारागेहसुतादिभिश्च संहिता भोगेषु सक्ता अपि ।
शूरा नैव मुधैव जन्मभुवने तुच्छा: प्रकुर्वन्ति किं
एक: काननग: सदा विहरति प्राग्रेसर: केसरी ।।

**—डा० कृष्णकान्त चतुर्वेद: वृन्दावनम्**

## 6

लोकलीलालालननिपुणो ह्यभिनेता मञ्चने कौशलम् ।
शोकपीड़ालालननिपुणो ह्यथ नेताऽऽश्वासने पौरुषम् ।।
देववाणीभाषानिपुणो ह्यनुवादी सङ्ग्रहे पण्डित: ।
वेदवीणावादननिपुणोकटुवादीसेवनेवञ्चित: ।।
राजभाषाधारणनिपुणो ह्यधिकारी म्लिच्छने पाटवम् ।
राष्ट्रभाषानर्तननिपुणो ह्यधिनाटचं नाटने मार्दवम् ।।
मेघगर्जे गर्जननिपुणो ह्यनुवेलं वेपते सागर: ।
गोपगोपीडम्बननिपुण: प्रतिकूलं बिम्बने नागर: ।।
छागहेलानाटकनिपुणो मकराश्रुप्रसवे नायक: ।
हस्तिनिद्रारम्भणनिपुणो नयनोन्मीलालापमायिक: ।।
गृध्रदृष्टया दर्शननिपुणो नवनेता वञ्चने केसरी ।
लोकवार्तापालननिपुणो जननेता ऽग्रेसर: केसरी ।।

**—डा० सुधाकराचार्य:, मेरठ**

## 7

य: प्रक्षेपपटु: कटुप्रतिभटप्रोद्दामदु:सम्पदाम्
य: स्वोद्देश्ययुते स्वराज्यरचने लग्न: पर: प्रीतिमान् ।
य: कुत्राऽपि सुनिर्भयस्य जनता सन्मानित: सर्वदा
धन्य: स: प्रतिभाजुषां सुविदुषामग्रेसर: केसरी ।।

**—पं० गुलाबचन्द्र: पाटलेन्दु:, जयपुरम्**

## 8

ये राष्ट्रद्युतिध्वंसका ह्यनुदिनं क्रूरास्तथा दुर्जना:
खालिस्तानहिताय यत्ननिपुणा: ये शत्रुणां बान्धवा: ।
ये सद्भावविमर्दका खलजना: ये मातृभूवंचका:
तेषां नाशनतत्परो विजयतामग्रेसर: केसरी ।।

**—नटवरलालजोशी, लक्ष्मणगढ़**

## 9

जम्बूकाः समरे दिशन्ति पदवीं सिंहासने संस्थिताः
नो भीतिर्हरिचर्मणां हि चरतां क्षेत्रे खराणामपि ।
वप्रक्रीडनचापलेन करिणां त्रातुं हतं भारतं
को भूयात् करिगण्डपाटनपटुर्ह्यग्रेसरः केसरी ।।

—श्रीरामदवे, जोधपुरम्

## 10

दंष्ट्रा दीपशिखोज्वलाः प्रकुपितज्वालाकुलाभाः सटा
उल्कारीतिविडम्बिपुच्छमुदितं विद्युत्पिशङ्गीच्छटा ।
प्रोद्यत्कान्तिकरालमक्षियुगलं चाङ्गारमाचुम्बति
शङ्के वह्निमयः प्रतापमहतामग्रेसरः केसरी ।।

—उमाकान्तशुक्लः, मुजफ्फरनगरम्

## 11

मान्यो मान्यतमो वदान्यचरितः सन्मार्गबद्धादर-
स्तन्त्रव्याकृतितर्कनीतिनिपुणो वेदान्तपारङ्गतः ।
द्राविडान्वयभूषणो यतिवरो जातोऽत्र वीरेश्वरः
शास्त्रारण्यविहारिणां मतिमतामग्रेसरः केसरी ।।

—डा० जगन्नारायणपाण्डेयः, जयपुरम्

## 12

किं सुतो मातृहस्तं निकृत्य क्षणाद्
रिक्थरूपेण लोके गृहीतुं क्षमः ।।
तत्कृते मातृ-भूमेः सुरक्षापरः
निर्निमेषः सतर्कोऽस्म्यहं 'केसरी' ।।

—गिरिजाप्रसाद'गिरीशः' जयपुरम्

# विलासः

अहर्निशं चारित्रिकह्रासः ।
अण्वायुधनिर्माणविकासः ।
निजधर्मग्रन्थानां ह्रासः ।
चित्ते सततं भोगविलासः ।।
दयसे कथं न देव !
त्वयि सत्यहं निराशः क्वगतः कृपाविलासः
प्रतिज्ञेयं त्वदीया दीनान् नहि जहासि
दुःखार्णवे निमग्नं न त्वं तथापि पासि
खिन्नस्तवैषदासः, क्वगतः कृपाविलासः ।
जानाम्यहं निषिद्धं बोधः परं स व्यर्थः
जानामि नीतिमार्गं गन्तुं न हा ! समर्थः
हा ! हन्त ! कर्मपाशः, क्वगतः कृपाविलासः ।।

—रामकुमारदाधीचः, जयपुरम्

## 2

कालिकललधुतानां पापपुञ्जैर्युतानाम्
हतविधिसहितानां कामवाताहतानाम् ।
विषमविषयतृष्णाऽऽवर्तगर्तान्तराणाम्
भवतिशरणमेकः कामिनीनां विलासः ।।
रहसिविहितवार्ता तापसंजातक्षोभः
गरलतरलश्वासै र्वह्निना हूयमानः ।
विशिखसमकटाक्षै र्दूयमानो जनः स्यात्
सरसिजनयनानां हा विचित्रो विलासः ।।

— रतनलालशर्मा, मनोहरपुरम्

## 3

दोषज्ञानामशुद्धौ मणिनिचयवतां रत्नशोधे प्रकृष्टे,
भूपानां शत्रुपक्षे नयविनयजुषां न्यायशास्त्रप्रतर्के ।
नेतॄणां राज्यकार्येऽभिनयरुचिमतां दूरदर्शावलोके
लावण्ये सुन्दरीणां तरुणतनुमतां राजते दृग्विलासः ।।

—मोहनलालपाण्डेयः, अजयमेरुः

## 4

स्वान्तं माद्यन्नभिकमुजनस्याऽत्र वश्यत्वभाजः
शश्वन्नव्यप्रणयरचनापाटवाभ्यर्थितस्य ।
एषा चित्रा स्थितिरुदभवत्साम्प्रतं बनिकाशो
जीयान्निघ्नँश्चटुलचपलाभामिनीभ्रू विलासः ।।
तन्वन्मोदं रसिकहृदये राजमुद्धावयँश्च
भिन्दँस्तापं तमसि च विवृष्वन्प्रकाशं स्वभासा
ज्ञानं यच्छन्नखिलजगते धारयन्धामवामं
जीयाल्लोके सुकविकविताकामिनीवाग्विलासः ।

—सत्यनारायणः, अजयमेरुः

## 5

लोकेभवन्ति मनुजाः कुशवाश्च वित्ते
तेषामहोऽद्य सततं विदितः प्रहासः ।
मित्र ! क्षणं शृणु वचो रमणीयमेतत्
लोकेनिरापदमहो कविताविलासः ।।

—डॉ० वासुदेवकृष्णचतुर्वेदः, वृन्दावनम्

## 6

धनस्य मानस्य च यौवनस्य
रूपस्य गर्वस्य च सुन्दरीणाम् ।
व्यर्था इमे सर्वविधाः विलासाः
एको यदि स्यात् कविताविलासः ।।

—पं० गुलाबचन्द्रः, जयपुरम्

## 7

बुभुक्षाकुलानां पिपासार्दितानां
शिशूनां च यूनामहो रोदनं च ।
सुदुर्भिक्षपीड़ा असह्या च जाता
कथं रे ! कथं तेऽस्ति हर्म्ये विलासः ?।।
यदि नास्ति समाजस्य वेदनाया समाङ्कनम् ।
कवितायां कवेः तत्तु विलासो वचसां वृथा ।।

—नटवरजोशी, लक्ष्मणगढ

## 8

अयि पिक ! किमुदास्से मौनमालम्बसे किं ?
चलति मलयवाते कामिनीमानभङ्गे ।
शृणु मधुकरमालागीतसौरभ्यसारो
ललितमधुलतानां वर्धतेऽसौ विलासः ।।

—उमाकान्ताशुक्लः, मुजफ्फरनगरम्

# माधुरी

वस्तुष्विह खाद्येषु माधुर्यं ते रोचते ।
श्रिता हि या वचनानि सैवमाधुरी माधुरी ।।

—रामकुमारदाधीचः, जयपुरम्

## 2

द्राक्षायामधुरत्वमेतदपरं भिन्नं सितायास्ततः
माधुर्यं पयसोऽतिभिन्नमपरं मिष्टान्नजातेस्ततः ।
वामाया अधरे परामधुरता भिन्ना सुधायास्ततः
विष्णोर्मे हृदये परैव रमतां श्रीमोहिनो माधुरी ।।

—मोहनलालपाण्डेयः, जयपुरम्

## 3

मुखमरन्दरसश्रुतिकारिणी,
प्रियतमेऽमृतनिर्झरिणी वरा ।
अभिकमानसमोदविधायिनी
विजयतां हि तवाधरमाधुरी ।।

—सत्यनारायणः अजयमेरुः

## 4

केचिद्दाशरथेर्वदन्त्यनुदिनं सर्वोत्तमा माधुरी
केचिच्छ्रीजनकात्मजैव मधुरा नान्यापरामाधुरी ।
केचिच्छ्रीर्वसुदेवनन्दनसुतस्यैवास्ति सन्माधुरी ।
मच्चित्ते वसति प्रकाममतुला श्रीराधिकामाधुरी ।।

—डा० वासुदेवकृष्णचतुर्वेदः. वृन्दावनम्

## 5

कमले ! ऽन्यमुखाब्जानां महासंकोचकारिणि !

लोकोत्तरा तवास्येन्दी दृश्यते रूप-माधुरी ।।

**—गुलाबचन्द्रः 'पाटलेन्दुः'**

## 6

घोषयोषाहृदां कृष्णतृष्णाजुषां

प्रेमपुष्टिप्रदा काऽपि जेजीयताम् ।

रासलास्योल्लसद्वेणुपाणेर्हरेः

माधुरी माधुरी माधुरी माधुरी ।।

सौरतश्रान्तकान्तोल्लसद्दोर्लता—

संश्रिताङ्ग्याः नताङ्ग्या अनङ्गोद्भवा ।

चन्द्रिकायां मिथः कापि जेजीयतां

माधुरी माधुरी माधुरी माधुरी ।।

सौरतान्ते निशान्ते पुनः कामिनं

कामायनं दृशा किञ्चिदुन्मीलया ।

वारयन्त्याः मिथः काऽपि जेजीयतां

माधुरी माधुरी माधुरी माधुरो ।।

**—गो० हरिरायः 'महाकविः'**

## 7

या कृष्णे मधुस्नेहनिर्भरभरी सा नागरी नागरी

येन कृत्स्नं व्याप्यते भवमुखं सा चातुरी चातुरी ।

या कृष्णार्चनचन्द्रिकामधुभवा सा माधवी माधवी

या कृष्णा मधुकृष्णचन्द्रमधुरा सा माधुरी माधुरी ।।

**—नटवरजोशी, लक्ष्मणगढ़**

## 8

आनीतश्चषकः करे जितमधुस्यन्दारविन्दप्रभे

तत्र प्रोच्छलदच्छसीधुललितामोदोद्गमः प्रोज्ज्वलः ।

तस्मिन् वीक्षितवैदुषीमदभरो बाले ! प्रगल्भायते

दिष्टया प्रौढिशतीकरम्बिततनूः कादम्बरी माधुरी ।।

**—उमाकान्तशुक्लः, मुजफ्फरनगरम्**

## 9

नो वसन्ते न कान्ताधरे माधुरी

नाऽमृते नाऽपि चेन्दौ जगज्जित्वरी ।।

प्राणपुष्पैः स्वकैरञ्जलिं बध्नतो

भूमिपुत्रस्य सन्माधुरी 'माधुरी' ।

**—गिरिजाप्रसाद 'गिरीशः' जयपुरम्**

## 10

दृष्टिर्या विदुषां मनोविजयिनी सा जित्वरी जित्वरी ।

या ते चारुनितम्बमन्थरगतिः सा गत्वरी गत्वरी ।।

या सुस्मेरविलासकार्मणकरी सा चातुरी चातुरी ।

कान्ते ! त्वल्ललिताधरामृतभरी सा माधुरी 'माधुरी' ।।

पुत्रं या हनुमन्निभं प्रजनयेत् सा वानरी वानरी ।

या विद्याधनधर्मकीर्तिकलिता सा चातुरी चातुरी ।।

या सन्नीतिविवेकतो विजयिता सा जित्वरी जित्वरी ।

या नारायणनाममोदमधुरा सा माधुरी 'माधुरी' ।।

**—राधाकृष्णशास्त्री, जयपुरम्**

# अखिलभारतीयसंस्कृतकविसम्मेलनम्

राजस्थान संस्कृत साहित्य सम्मेलन के सम्पन्न हुए चतुर्दश-महाधिवेशन के अवसर पर एक अखिल भारतीय संस्कृत कवि-सम्मेलन का आयोजन किया गया। इसमें राजस्थान के अतिरिक्त सहारनपुर, मुजफ्फरनगर, बरहन, मथुरा, लखनऊ, मेरठ, बनारस आदि सुदूरस्थ स्थानों से आये हुए कवियों ने भी भाग लिया। कवि सम्मेलन की अध्यक्षता बनारस के डॉ० शिवदत्त शर्मा चतुर्वेदी ने तथा संयोजन श्री कलानाथ शास्त्री, जयपुर ने किया।

कवियों के पदलालित्यपूर्ण विभिन्न सुमधुर छन्दों में निबद्ध भावमयी रचनाओं ने श्रोताओं को भावविभोर किया। पठित सरस काव्य आपके रसास्वादन के लिए यहाँ प्रस्तुत हैं।

—सम्पादक

**● उमाकान्त शुक्लः, मुजफ्फरनगरम्**

## मुक्तक-मालिनी

लिखति महिषनीलां विद्युदम्भोदमालां
भवति गमनवेला मानसं प्रत्युदग्रा ।
इति रसिकविहङ्गा गीतिमन्त्यां रसार्द्रां
शृणुत जिगमिषोर्मे राजहंसस्य भव्याम् ।। 1 ।।

यदि भवसि कदाचित् खेदरेखावरुद्धं
मम हृदय ! तदानीं भावसिन्धोः समुत्थम् ।
कृतवचननिचोलं नर्तितार्थप्रसादं
विधुतविधुरभावं गीतसीधुं पिब त्वम् ।। 2 ।।

निबिडविकटबन्धा कालरात्रिर्विशीर्णा
प्रकटितनवरागं जृम्भते सुप्रभातम् ।
हस कमल ! तर त्वं हंस ! गुञ्ज द्विरेफ !
प्रमदवनविलासो वर्धतामेधतां श्रीः ।। 3 ।।

मुखरयति बलाकां दुग्धधारां पयोदे
चपलयति च केकां केकिनि क्लिन्नचित्ते ।
अयि किमिति मुधा त्वं पल्वल ! क्षीणकूलं
भवसि ननु भवित्री कापि ऋद्धिस्तवाढ्या ।। 4 ।।

त्वयि खगकुलशोभा मानधुर्यस्त्वमेव
क्षणमहमिह मौनं चातक ! त्वां प्रयाचे ।
वितरति तरलाभान् सम्प्रति स्वातिबिन्दून्
पनसपटलनीला कापि कादम्बिनी ते ।। 5 ।।

विकसति कुसुमाग्रे पल्लवे सानुरागे
विलसति मधुभावे सत्पे सौरभाढ्ये ।
परिचितमधुकोशाः सम्पराप्ता मिलिन्दा
भरत भरत मोदं बिन्दवो माकरन्दाः ।। 6 ।।

इह वसति पुरा यो मानसे राजहंस–
स्त्यजति कमपि खेदात्तं प्रसिद्धं विवेकम् ।
इति मुदितहृदस्ते केऽपि कारण्डवाद्याः
स्फुरितनिजशरीरास्तत्तटे सम्पतन्ति ।। 7 ।।

तदवधि वनमेतद् गाहतां स्वागतं ते
विचर हरिण ! सम्यग् याप्यतां कोऽपि कालः ।
यदवधि कुटिलोऽसावात्तचाप. कठोरो
मृगयुरशनिपातं बाणलीलां न कुर्यात् ।। 8 ।।

अयि पिक ! किमुदास्से मौनमालम्बसे किं
चलति मलयवाते कामिनीमानभङ्गे ।
शृणु मधुकरमालागीतसौरभ्यसारो
ललितमधुलतानां वर्धतेऽसौ विलास ।। 9 ।।

## वाणी-वन्दना

लसन्त्यन्या वाचो भुवि मधुरवर्णाः पुनरहो
न तास्त्वच्छायायाः कथमपि कलां बिभ्रति समाः ।
गिरां मातर्मातर्निखिलजगतामन्तरुदितं
तुषारप्रोद्भासं प्रसरति यशस्ते सुविपुलम् ।।1।।

त्वमेवाचारान्नो मुदितमनसा शिक्षयसि वै
सुरम्यं पन्थानं प्रथयसि जनानां प्रतिदिशम् ।
घनध्वान्तं छित्वा कलयसि कलानां कलकलां
निधानं सौख्यानां त्वमसि नहि संशीतिरधुना ।।2।।

नवीने निर्माणे प्रभवसि रसोद्रेकमहिते
समग्रं पासित्वं जगदिदमये सत्त्वकलिते ।
क्षणात् पापं हंसि प्रगुणगुणसार्थैकविभवे
त्रयाणां देवानां त्वमसि कमनीयैकरचना ।।3।।

कदाचिद् वेदानां गहनगरिमाणं गणयसे
कदाचित् काव्यानां कलितकलनामाकलयसि ।
कदाचिच्छास्त्राणां प्रसृतपरिपाटीं प्रथयसे
जनानामानन्दं जनयसि जगत्यामविरलम् ।।4।।

विपाकः पुण्यानामगणितगुणानां समुदयो
निधानं सौख्यानां शमनिचयकन्दाङ्कुरमही ।
त्वमेका कल्याणि प्रसिततरभावैः कृतधियां
समग्रं सौभाग्यं स्नपयसि जनानामयि शुभे ।।5।।

त्वया मेधा वन्द्या भजति च सुधा सौष्ठवपदं
त्वया प्रीतिः फुल्ला फलति फलिनामार्जवलता ।
त्वया सङ्गीतानां सुरसरसधाराः पुलकिता–
स्त्रिलोक्यां का वाणी भजति तव सौभाग्यविभवम् ।।6।।

न याचे त्वां मातर्द्रविणमनघं ध्वंसरहितं
न वा त्वां संयाचे यश इह मनागिन्दुधवलम् ।
मम त्वेषा याच्ञा यदयि निखिले भूमिवलये
प्रसादप्राचुर्यं वितर तरसा सम्प्रति मुदा ।।7।।

नमस्ते मेधायै सहृदयसुधायै मम नमो
नमस्ते सौम्यायै बहुलगुणगुर्व्यै मम नमः ।
नमस्ते श्रेयस्यै सकलजनसिद्धयै मम नमो
नमस्ते वाचे संस्कृतसमभिधायै मम नमः ।।8।।

● डॉ० वासुदेवकृष्ण चतुर्वेदी, मथुरा

## आशंसनम्

1

मानुष जन्म यदा भवतात्
निवसामि तदा गोकुलवर ग्रामे
भवेयं पशुर्नहि मेऽस्तिवशो
विचरामि सुनन्दगवामनुवामे ।
प्रस्तरखण्डस्तु तस्याऽचलस्य
सुछत्रीकृतो हरिणाऽरि विरामे
सत्त्वेखगे निवसामि सदाऽहं
कालिन्दी कूले कदम्ब ललामे ।

2

योगिनीनां भोगिनीनां विकलवियोगिनीनां
जगति नो जागरूका जातयो भविष्यन्ति
भणति रत्नाकरो न सुखदा दिवसा चाद्य
तर्हि दुःख द्वन्द्व रात्रयोऽपि नाशमेष्यन्ति
हित्वा प्रेमज्ञानेन सुक्षेमस्योपदेशमते
भित्तिर्यदा नास्तिक्यपटलानि भविष्यन्ति
धातमेव भूयः स्यात् कृष्ण कृपयैव अहो
उद्धव ! चर्चायै चात्र वार्ताः शेषमेष्यन्ति ।।

### भारतवन्दना

अस्ति चेदीश्वरः किं स्वरूपात्मकः
स्वर्गतो भूगतो वाऽथ सर्वत्रगः
इत्थमुत्कृष्टचिन्तापरैश्चर्चितं
भा रतं भारतं नौमि भूति प्रदम् ।।
यस्य वृन्दावनं कण्ठहार - प्रभं
शैलगोवर्धनो मौक्तिकं हारकम्
माथुरं मण्डलं वैजयन्ती निभं
भारतं भारतं नौमि भूतिप्रदम् ।।
यस्य भाभा ललाटस्थितं चन्दनं
तैलसंशोधकं यस्य सद् वन्दनम्
फुल्लपद्म प्रभैः सेतुभिः पूरितं
भा-रतं भारतं नौमि भूतिप्रदम् ।।

## विकासवादोऽथ विनाशवादः

एकतो विकासराज्यमन्तिके,
हसति वै विनाशकोऽस्य मस्तके शान्तिरस्तु ३

विकास : 1

तैलमद्य लभ्यतेऽत्रवारिधौ-दूरदेशोदूरभाषसन्निधौ
चित्रमिदं चित्रमयं दर्शनं-चित्रेऽपि चारुचित्तगर्जनं
किमपि नास्ति जगति चाद्य दूरकेऽऽऽ, एकतो० ।।

विनाश : 2

तिष्ठ रे विकास! पश्य मे बलं, अग्निसात् क्रियते तत्केवलम्
दूरभाषकं हि मे सहायकं, क्षणेनैव वायुयान वृन्दकं
संकेत क्षणे याति दूरके—एकतो विकास० ।।

विकास :

रजतमयीचन्द्र भूमि कल्पना, प्रत्यक्षी क्रियते नैव जल्पना
मानवं विनापि वायुयानकं–वृष्टेरप्यभावेमेघयानकं
वीक्ष्यलगतिदैवमद्य दूरके—एकतो० ।।

विनाश :

चन्द्रलोक दूषणं हि भूषणं–वृष्टि वातवान्तकं हि पूषणं
अणुप्रसाद कर्मणापि यानकं-भीतिकरं चिन्तायुतं घातकं
भविता रे ! तिष्ठ यमस्यान्तिके—एकतो० ।।

विकास :

कूपतो जलस्य निःसारणं–बालानां कष्टं निष्कारणम्
नैवयतो गेहे जलदर्शनं—विद्युताऽत्र तमसः प्रपलायनम्
पेषणीगता च पुरातत्त्वके—एकतो० ।।

विनाश :

विस्मृतारे ! कुतुब शिखरजाव्यथा-विद्युताश्तायथानराःवृथा
यान्ति नराः प्रतिदिनं यमालये-वास्युः भूगर्भे वा यंत्रालये
स्वस्थता गता ननु विश्रामके—एकतो० ।।

विकास :

अद्भुतंहि पश्यचित्रदर्शनं - चित्रपटालये सिन्धुगर्जनं
हिमगिरेर्हि भव्यछटारक्षणं-क्षणमध्ये कुतुबताजदर्शनम्
विश्वभ्रमणमद्य बिना द्रव्यके—एकतो० ।।

विनाश :

चित्रपटालये कामवन्दनं—दृश्यते कुचादिकस्य मर्दनं
ब्रह्मचर्यं संस्कृतेश्च नाशनं—गर्भधारणं च तस्य पातनं
वीक्ष्य साधवोऽपि यान्तिगर्तके—एकतो० ।।

विकास :

यंत्र युगस्याद्यनवा निर्मिति-भित्ति विना सेतूनां च संस्थितिः
टॅंकराडारमयी संस्कृतिः—नाना सुविधामयी परिस्थितिः ।
निर्धनता याति द्रुतं दूरके—एकतो विकास राज्यमन्तिके
हसतिवैविनाशकोऽस्य मस्तके-
शान्तिरस्तु शान्तिरस्तु शान्तिरस्तु ।।

## भारतम्

काश्मीरो भालदेशो मणिपुर मुकुटो राष्ट्र पंजाब बाहू
आसामो भू प्रदेशो हिमगिरि विदितो यस्य चूडा किरीटः
दिल्ली कर्णाटकाख्यौ नयन युगलकं मध्य देशोऽस्ति वक्षः
गोआ नीकोवराख्यौ चरण सरसिजे केरलो यद्विहारः
प्राणायस्योत्तराख्यो विमल नर नुतो राम कृष्ण प्रसादात्
सौराष्ट्रो नासिका वै तमिलमुहरियाणान्ध्रकाणोन्द्रियाणि
इत्थं राजाङ्ग रूपं जयति हि सततं भारतं राष्ट्रमग्रयम्

## वृक्षारोपणम्

उदुम्बरमयः शिवः सुब्रह्मा वटवृक्षमयो
विष्णुमयः पिप्पलः सुशास्त्र तत्त्वं ज्ञायताम्
पाद्यधूपदीपकैश्चन्दन नैवेद्यादिभिः
पूजयित्वा वृक्षदेवं मनोऽभीष्टमाप्यताम्
गृहे गृहे चत्वरे सुहट्टे राजमार्गे तटे
उप्त्वा पादपं शुभं गोलोकपदं रक्षताम्
श्रुत्वा शास्त्रतत्त्वं नूनं कृत्वा वृक्षारोपणं च
सर्वं देवमयो वृक्षो दिवानिशं जप्यताम्

● डॉ० कृष्णकान्त शुक्लः, लखनऊ

## मुक्ता-कणिकाः

वदनं प्रसादमधुरं, हृदयं तरलं, वचश्च रमणीयम् ।
सम्भाषणञ्च हृद्यं येषां तान्नित्यशो वन्दे ।। 1 ।।

धन्या भारतमाता यत्क्रोडे तद्धि निर्गुणं ब्रह्म ।
सगुणं रूपं बिभ्रत् खेलति बहुशो भृशं रम्यम् ।। 2 ।।

अधरीकृतमाध्वीका विशदा सुखदा प्रियंवदा रम्या ।
सरसानुग्रहकर्त्री कान्ता कविता चिरं जयति ।। 3 ।।

तदनु जयन्ति कवीनां दिव्या मधुराः सुधामुचो वाचः ।
यासां भङ्गिविशेषैः सहृदयलोका नु माद्यन्ति ।। 4 ।।

हृदयस्थानथ भावान् यः सविशेषं सुचित्रितान् कुरुते ।
वाग्देव्याः प्रियतनयः कविरिति प्रख्योचितो धीरः ।। 5 ।।

सा कविता सा वनिता या हृत्तन्त्रीं सुझङ्कृतां कुरुते ।
अन्या विडम्बनैव ययका भारायते लोकः ।। 6 ।।

प्रातःस्मरणीयोऽसौ प्राणपणेनापि योहि सेवेत ।
सुजलां सुफलां सुखदां जननीमथ जन्मभूमिञ्च ।। 7 ।।

परदोषे कृतलक्ष्या एके जीवन्ति हन्त कृतकृत्याः ।
निजदोषेषु सुविज्ञा विरला लोके जगद्वन्द्याः ।। 8 ।।

अति विषमं खलहृदयं को विज्ञातुं विशेषतः शक्तः ?
स्मृतिरपि यस्य सुतीक्ष्णा हृदयं गाढाहतं कुरुते।। 9 ।।

हालाहल ! महिमानं गुरुतरवेगं निजं कथं मनुषे ।
त्वदपेक्षयापि घोरा दुर्जनवाचो नु सर्पन्ति ।।10।।

सज्जन ! खलभुजगैस्त्वं दष्टः खिन्नोऽसि किं महासत्त्व !
चन्दनतरुरथ जातो भुजगवृतो किं न दृष्टान्तः ? ।।11।।

प्रासादानारुह्य हृतका ये पातयन्ति निःश्रेणीम् ।
तेषां कौशलमेतदुपकर्ता यन्न लक्ष्येत ।।12।।

विषवमने किल दक्षं कुटिलगतिं भूरि वञ्चनाचतुरम् ।
गुप्तपदं सर्पन्तं खलं द्विजिह्वं मुहुर्वन्दे ।।13।।

अय्यवसरवादिस्त्वं परमकृतार्थोऽसि मे मतिर्भवति ।
शुष्कप्रायाः सर्वे हरितः संस्त्वं सदा भासि ।।14।।

अयि लालाटिकबन्धो ! लोकत्रितयं त्वया विना शस्त्रम् ।
विजितं हि हेलयैव तस्मादनिशं प्रणम्योऽसि ।।15।।

क्षुद्रजनैः क्रियमाणं बत ! सत्कर्मापि वाच्यतां याति ।
अल्पज्ञैर्व्याख्यातं सच्छास्त्राणां यथा मर्म्म ।।16।।

मलिनो मलिनं प्राप्य क्लिश्नात्यन्यान् सदैव निःशङ्कम् ।
तरुणीनयनासक्तं कज्जलमत्रास्ति दृष्टान्तः ।।17।।

कृष्णा वा शुक्ला वा प्रोन्नतिभाजो भवन्ति लोके वै ।
असिताः सिताश्च केशा मूर्धानमिहाधिरोहन्ति ।।18।।

कृष्णाशया हि प्राय उन्नतदेशानहो समायान्ति ।
तरुणीकुचाधिरूढौ श्यामलचिन्हौ नु दृष्टान्तौ ।।19।।

श्लाघ्यः स एव लोके विषं निपीयापि यः सुधां किरति ।
अपकारिष्वपि यस्य नैव विकारो दृशं व्रजति ।।20।।

सञ्जीवनीस्वरूपः सरसो ललितो गिरां सुनिष्यन्दः ।
भागीरथीप्रवाहः कवितापाकश्चिरं जयति ।।21।।



● डॉ० सुधाकराचार्यः त्रिपाठी, मेरठ

## जयपुरीया

जयपुरीया सरिदहो कासाररूपं सन्दधाना ।
अलकनन्दा सरति मन्दं मन्दमुच्चैरुच्छलन्ती ।
अकलमन्दा चलति बिन्दन् बिन्दतीवाभाति तीरम् ।।1।।

कुटिलकेशी दिशति तारं तारतारं तर्जनीभिः ।
कलकपोला कलति गायं गायमुच्चैराकलन्ती ।।2।।

चलकपोला वलति कम्पं कम्पमुच्चैरुच्चरन्ती ।
चपलगात्री मुणति मौनं मौनमिङ्गत्यङ्गुलीभिः ।।3।।

चटुलनेत्रा दिशति हासं हासमच्छापाङ्गकोणैः ।
छलितभावा चरति देशं देशमुच्चैरुच्चरन्ती ।।4।।

जयपुरीया सरिदहो कासाररूपं सन्दधाना ।
पुलकहासा हसति मन्दं मन्दमुच्चैरुच्चलन्ती ।।5।।

मधुरवाचा हरति चित्तं चित्तमुल्लापैरनद्धम् ।
वलितगात्री स्मरति हेलं हेलमुल्लासैरमन्दम् ।।6।।

जयपुरीया सरिदहो कासाररूपं सन्दधाना ।।

